# ॥ श्रीस्तोत्ररत्नाकरप्रथमभागः सटीकः ॥

श्रीधर्मघोषसूरिकृताभिश्चतुर्विंशतिजिनस्तुतिभिः, श्रीवीर–नेमि–सरस्वतीस्तुतिगर्भित–
समस्यावद्धभक्तामरस्तोत्रत्रयेण सङ्गृहीतः उदयधर्ममुनिप्रणीतवाक्यप्रकाशेन च मिलितः

प्रसिद्धकर्त्री–श्रीयशोविजयजैनसंस्कृतपाठशाला–म्हेसाणा.

इदं पुस्तकं मुम्बय्यां शाह वेणीचन्द सुरचन्द, सेक्रेटरी श्रीजैनसंस्कृतपाठशाला इत्यनेन निर्णयसागरमुद्रणालये
कोलभाटवीथ्यां २३ तमे गृहे रामचन्द्र यशवन्त शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

प्रति ५००



Price annas 7

वीरसंवत् २४३९. विक्रमसंवत् १९६९. ईस्वी १९१३.

# उपोद्घातः

इह खलु निखिलजैनमताऽवलम्बिजनेषु विभूतियुता विभूतिरहिता वा सर्वेऽपि सामान्यतयोत्कृष्टतरग्रन्थानामुत्तमलाभभाजो भवितुमर्हन्ति एवं निध्याय सकलशास्त्रपारावारपारदृश्वचिरन्तनाऽऽचार्योक्तान् ग्रन्थान् केवलमूलान् सटीकान् वा वर्तमानसम्प्रदायशैलीमनुसरतो विद्वद्भिः मुनिपुङ्गवैः सुश्रावकैश्च विरचितान् मुद्रयित्वा जैनमतानुयायिष्वितरमध्यस्थजनेषु च प्रसारयामः ॥ आर्यधर्म्मसकलशास्त्राणि च प्रसृतानि गीर्वाणवाण्यामेव ॥ यतः सा कर्णाऽऽह्लादनविधायिन्युच्चारणे, शब्दसामर्थ्ये च सर्वोत्कृष्टतरा अर्थगाम्भीर्यतया लिखिताऽपि संक्षेपेण प्रकाशयन्त्यर्थं विस्तरेण विराजते इत्यपि वरीवर्त्तते विदिततमं विदुषां हृदि केषाञ्चित् ॥ अज्ञानतिमिरे प्रसृतेऽपि मध्यकाले कियत्कालानन्तरमिदानीं गीर्वाणभाषा प्रचलिता, यत् यतन्तेऽनेकत्रानेकधाऽस्याः विस्तराय सर्वेऽपि सहृदयाः ॥

अस्मिन् ग्रन्थे श्रीधर्मघोषसूरिविरचिता स्वोपज्ञावचूरिसहिता अष्टधायमकसंहिता चतुर्विंशतिजिनस्तुतिः, श्रीधर्मवर्धनगणिविरचितभक्तामरचतुर्थपादसमस्याबद्धम् श्रीवीरस्तुतिगर्भितम् स्वोपज्ञटीकासहितं भक्तामरस्तोत्रम्, भक्तामरस्य चतुर्थपादसमस्यापूर्तिरूपं श्रीभावप्रभसूरिविरचितं विस्तृतस्वोपज्ञटीकासहितं अत्र समुद्रविजयनृपशिवादेवीपुत्रे श्रीनेमिनाथे रचितविवाहसामग्रीशोभिते सपरिवारे विवाहार्थं तोरणसमीपं समागतेऽपि नानाविधपशूनां बृहत्पूत्कारं श्रुत्वा दयां विधाय तान् बन्धनात् प्रमोच्य पश्चाद्गते सति उग्रसेनराजपुत्री राजीमती प्रियवियोगजं दुःखं प्रकटयन्ती सति नेमिनं सम्बोधयित्वा उपालम्भगर्भितस्तुतिम् करोति एवं नेमिसम्बोधनरूपं श्रीनेमिभक्तामरस्तोत्रम्, श्रीधर्मसिंहसूरिविरचितम् भक्तामरस्तोत्रचतुर्थपादसमस्यापूर्तिरूपं स्वोपज्ञस्पष्टताविधायकटीकासहितं श्रीऋषभदेवपुत्रीसरस्वत्योः स्तुतिभिर्गर्भितम् श्रीस-

रस्वतीभक्तामरस्तोत्रं, स्तोत्रत्रयानन्तरं परिशिष्टे उदयधर्ममुनिना विरचितो वाक्यप्रकाशष्टीकासंवलितः प्राकृतोदाहरणमिश्रश्लोकबद्धः पदवाक्यकारकसमासतद्धितादीनां संक्षेपेण निरुपकश्च । एवं संस्कृतज्ञानाम् अत्युपयोगिनो ग्रन्थाः वर्तन्ते मुद्रिताः प्रतिभाभृतां बंहीयस्युपकृत्यै ।

अस्मिन् श्रीस्तोत्ररत्नाकरप्रथमभागे सङ्गृहीतानाम् ग्रन्थानाम् कर्तारः के कदा च महिमण्डलं मण्डयामासुः इत्यादि जिज्ञासायाम् प्रवर्त्तमानायाम् चतुर्विंशतिजिनस्तुतेः प्रणेता श्रीधर्मघोषसूरिस्तु श्रीमत्तपोगच्छभागीरथीप्रवाहहिमगिरेः श्रीमज्जगच्चन्द्रसूरेः शिष्यस्य श्रीमद्देवेन्द्रसूरेः शिष्यो बभूव । स च प्रथमं धर्मकीर्त्तिनामोपाध्यायोपाधिविभूषितोऽभूत्, सूरिपदप्राप्त्यनन्तरं च धर्मघोषसूरीति नाम्नाऽलङ्कृतोऽजनि, स विक्रमार्कीयद्व्युत्तरत्रयोदशशत ( १३०२ ) तमेऽब्दे सञ्जातदीक्षस्य स्वज्येष्ठसोदरस्य विद्यानन्दमुनेर्दीक्षानन्तरं धर्मकीर्तिरिति नाम्ना दीक्षां गृहीतवान्, त्रयोविंशत्यधिकत्रयोदशशत ( १३२३ ) तमे वर्षे उपाध्यायपदम्, अष्टाविंशत्यधिकत्रयोदशशत ( १३२८ ) तमे च संवत्सरे सूरिपदमभूषयत् । स्वर्गं च सप्तपञ्चाशदुत्तरत्रयोदशशत ( १३५७ ) तमे ऽब्देऽलङ्कृतवान्, इतिमुनिसुन्दरसूरिपादप्रणीतगुर्वावलीपट्टावलीभ्यामवसेयं । तैरेव सहृदयैः श्रीमद्धर्मघोषसूरिभिर्मन्दमतीनां भव्यसत्त्वानां यथावस्थिततत्त्वावगमाय श्रीजैनागमोदधेरुद्धृत्य अनेकानि प्रकरणरत्नानि तीर्थकल्पवृत्तानि च गुम्फितानि वरिवर्त्तन्ते ।

प्रथमं समस्यारूपभक्तामरग्रन्थः षट्त्रिंशदुत्तरसप्तदशशत ( १७३६ ) तमप्रमिते वर्षे विजयहर्षवाचकस्य शिष्येण धर्मवर्धनगणिना विरचित आसीत् । तदनु नेमिसम्बोधनभक्तामरस्य कर्तारः भावप्रभसूरयः श्रीमहिमाप्रभसूरीणाम् शिष्याः बभूवुः । सरस्वतीभक्तामरस्य प्रणेतारस्तु श्रीमद्धर्मसिंहसूरयः मुनिषेमकर्णस्य विनेयाः बभूवुः ।

परिशिष्टे च भागे प्रकाशितस्य वाक्यप्रकाशस्य विधाता रत्नसिंहसूरेः शिष्य उदयधर्ममुनिस्तु सप्तोत्तरपञ्चदशतमे ( १५०७ ) वर्षेऽमुं वाक्यप्रकाशं रचितवान्, अस्य विद्यागुरुर्देववर्धननामाऽऽसीत् । वाक्यप्रकाशस्य पञ्चाशीतितमस्य श्लोकस्य टीकायां "मत्कृतकविकल्पद्रुमाभिधहैमधातुपाठादवगन्तव्याः" इत्यादि वाक्यात्कविकल्पद्रुमस्यायमेव कर्त्ता हर्षकुलगणिर्वाक्यप्रकाशटीकायाश्चेति निर्णीयते ।

किं च काव्यविच्चमत्कृतिपदलालित्यार्थगाम्भीर्याऽनुप्रासश्लेषादिसमन्वितस्तोत्रसङ्ग्रहमयः स्तोत्ररत्नाकरप्रथमभागनामको ग्रन्थः प्रसार्यतेऽस्माभिः । एनं मुद्रयितुं च मुनिवर्यश्रीमद्भक्तिविजयमहाराजेन एकं पुस्तकं दत्तं अस्मभ्यमतस्तदीयामुपकृतिमनुपमितिं वयं स्मरामः ।

सर्वेषु मुनिराजेष्वा—नन्दसागरनामकः । देवेषु मघवेवासौ, श्रेयाञ्छोधितवानिमम् ॥ १ ॥

प्रमादादिना कदाचिदपशब्देन युक्तं स्यात्तदा सज्जनाः कृपया शोधयन्तुतराम् ।

॥ निवेदकाः प्रसिद्धकर्तारः ॥

# श्रीस्तोत्ररत्नाकरस्यानुक्रमणिका.




| | नामवर्गः | पत्राङ्कः |
|---|---|---|
| १ | उपोद्घातः | १ |
| २ | श्रीधर्मघोषसूरिकृता चतुर्विंशतिजिनस्तुतिः | १ |
| ३ | श्रीधर्मवर्धनगणिविरचितम् समस्यावद्धं भक्तामरस्तोत्रम् ( श्रीवीरस्तुतिगर्भितम् ) | ७ |
| ४ | श्रीभावप्रभसूरिविरचितम् श्रीनेमिभक्तामरस्तोत्रम् | २१ |
| ५ | श्रीधर्मसिंहसूरिविरचितम् सरस्वतीभक्तामरस्तोत्रम् | ३७ |
| ६ | श्रीउदयधर्ममुनिकृतो वाक्यप्रकाशः सवृत्तिकः | ५७ |




## ॥ शुद्धिपत्रकम् ॥

| पत्रांक | पृष्ठांक | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३ | २ | ३ | स्तेषा | स्तेषां |
| ८ | २ | १३ | श्री २-१-४ | श्रीसि० २–१–४ |
| ९ | २ | ६ | भविना | भविनां |
| १४ | २ | १ | सवदा | सर्वदा |
| २७ | २ | ८ | व्रजहारि | व्रज हारि |
| २८ | १ | १ | तपासि | तपांसि |
| ३० | १ | १० | कथंभूत | कथंभूतः |
| ३२ | १ | १ | अरिनेमि | अरिष्टनेमि |
| ३३ | २ | १० | हीत्युपप्रदर्शने | हीत्युपमाप्रदर्शने |
| ४५ | १ | ४ | ज्योतिष्मयी | ज्योतिर्मयी |
| ४५ | २ | ६ | सूयातिशायि | सूर्यातिशायि |

| पत्राक | पृष्ठाक | पंक्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४९ | १ | १२ | दधि शोषणाय | दधिशोषणाय |
| ५० | १ | १ | हारन्तरस्थं | हारान्तरस्थं |
| ५० | २ | २ | उदयादि | उदयाद्रि |
| ५२ | १ | १ | प्रकाररचना | प्रकामरचना |
| ६५ | २ | २ | सोपसर्गाश्च | सो(ताश्चो)पसर्गाश्च |
| ७२ | १ | ७ | स्मृत्यर्थ | स्मृत्यर्थं |
| ७२ | २ | १३ | १०४ | १०५ |
| ७५ | १ | १३ | इवो | इवे |
| ७५ | २ | २ | तरपू | तरपू |
| ७७ | १ | १२ | इति सात् | इति ससात् |

॥ श्रीधर्मघोषसूरिकृता अवचूरिसमेता

# चतुर्विंशतिजिनस्तुतिः ॥

जय वृषभजिनाभिष्टूयसे निम्ननाभि–र्जडिमरविसना[२]भिर्यः सुपर्वाङ्गना[३]भिः ।
तम इह[४] किल नाभिक्षोणिभृत्सूनुना[५]ऽभि–द्रुतभुवनमनाभि क्षान्तिसंपत्कुनाभिः ॥ १ ॥

अवचूरिः–स त्वं गभीरा नाभिर्यस्य ( १ )। जडिमाऽज्ञत्वं तस्य हरणे रवेः सदृशः ( २ )। देवस्त्रीभिः ( ३ )। भरतक्षेत्रे (४)। नाभिनृपपुत्रेण (५)। येन त्वयेति गम्यते। परपीडित(तं)भुवनं इतिवचनात् हिंसितं (?)। कुनाभिर्निधानं। ननु वाक्यान्तरप्रवेशेन "विच्छिन्नं खण्डितं" इतिवाग्भटालङ्कारवचनादनुचितमिहेदं, नैवं, अलङ्कारचूडामणौ 'क्वचिद्गुणोऽपी'(क्वचिद्गुणःका०अ०४)ति भणनात् यमकपदप्राचुर्याच्च वाक्यान्तरप्रवेशोऽपि न दुष्टम् ॥ १॥

प्रकटितवृषरूप[१] त्यक्तनिःशेषरूप[२]–प्रभृतिविषयरूप ज्ञातविश्वस्वरूप ।
जय चिरमसरूप[३]ः पापपङ्काम्बुरूप[४], त्वमजित निजरूपप्रास्तसज्जातरूप[५] ॥ २ ॥

अव०–प्रशस्यधर्म ( १ ) प्रशस्ये रूपप् प्रत्ययः (त्यादेश्च प्रशस्ते रूपप् ७-३-१० ) त्यक्तानि निःशेषाणि रूपप्रभृतीनां विषयाणामिन्द्रियार्थानां रूपाणि भेदा येन स तथा ( २ )। अनन्यसदृशः ३। नीरोपमः ( ४ ) जात्यसुवर्ण (५)॥२॥

जय मदगजवारि[१]ः संभवान्तभवारि[२]—व्रजभिदिह तवारिश्रीर्न[३] केनाप्यवारि[४] ।
यदधिकृतभवारिध्वंसनः[५] श्रीभवारि[६]ः, प्रशमशिखरिवारि[७] प्राणमहानवारि[८]ः ॥ ३ ॥

अव०—वारिस्तु गजबन्धभूः ( १ ) अराः सन्त्यत्र अरि चक्रं "रथाङ्गं रथपादोऽरि चक्रं" इति वचनात् । तस्य श्रीर्लक्ष्मीः शोभा वा ( २ ) । केनापि हरिहरादिना सूर्यादिना वा । न अवारि प्रस्खलिता ( ४ ) । अङ्गीकृतसंसार-शत्रुध्वंसनः ( ५ ) त्वं वर्तस इत्यध्याह्रियते । श्रीभवः कामस्तस्यारिर्वैरी । यद्वा श्रिया भातीति क्वचिड्डु(५-१-१७१ )-प्रत्ययः । ततः श्रीभा पञ्चत्रिंशद्वचनगुणैर्भान्ती वारिः सरस्वती वाणी यस्य सः । उक्तं चानेकार्थे—"वारिर्घट्यां सरस्वत्यां, गजबन्धनभुव्यपि" इति ( ६ ) । शिखरी वृक्षः ( ७ ) । अनतो लुप् ( १-४-५९ ) । दानवारयो देवाः ( ८ ) । अत्रारिशब्दप्रयोगः कथञ्चिदर्थान्तरे बहुशोऽपि न दुष्टः ॥ ३ ॥

अकृत शुभनिवारं[१] योऽत्र रागादिवारं, सुविनतमघवारं संवरोद्भूः[३] सुवारम्[२] ।
मदनदहनवारं[४] दोलितान्तर्भवारं[५], नमत सपरिवारं तं जिनं सर्ववारं[७] ॥ ४॥

अव०—शुभानि(नि)वारयतीति (१) । सुखेन वार्यते सुवारं (२) । संवरोद्भूरभिनन्दनः(३) । वारं जलं "वाःशब्दः पानीयवाची स्त्रीलिङ्गश्च" ( ४ ) । "दुलण् उत्क्षेपे" ( ५ ) । अरिसमूहं ( ६ ) । सर्वकालम् ( ७ ) ॥ ४ ॥

तव जिन सुमते न[1] प्रत्यहं तन्यते[1] न[1], स्तुतिरिति[2] सुमतेन कृत्तमोनिष्कृतेन[3] ।
यदिह जगति तेन द्राग्मया संमतेने* ध्रुवमितदुरितेन श्रीश भाव्यं हितेन ॥ ५ ॥

अव०—न न तन्यते, अपि तु तन्यत एव ( १ )। द्वौ नञौ सातिशयमर्थं गमयतः । मया इति संवन्धः । इति वक्ष्यमाणप्रकारेण २ । निष्करणं निष्कृतं निरासस्तस्मिन् सूर्य ३। सर्वसाधारणत्वादभीष्टेन मैत्र्यादिभावनान्वितत्वात् (४) ५

परिहतनृपपद्म[1] श्रीजिनाधीश पद्म-प्रभ सदरुणपद्मद्युत्[2]तपोहंसपद्म[3] ।
त्वदखिलभविपद्मव्रातसंबोधपद्म-स्वजन[4] गतविपद्मय्येतु[5] शर्माङ्कपद्म[6] ॥ ६ ॥

अव०—नृपपद्मा राज्यलक्ष्मीः १ । पदैकदेशे पदसमुदायोपचारात् पद्मरागमणिवत् द्युतिः २ । तपसः प्रधाननिधिविशेषः । "हंसः श्रेष्ठे" इत्यनेकार्थवचनात् ३ । पद्मस्वजनः सूर्यः ४ । त्वत् त्वत्प्रभावात् ५ । गतविपद् शर्म ६ । "तृतीयस्य पञ्चमे" ( १-३-१ ) इति विकल्पितत्वात् दस्य नो न । पद्मलाञ्छन ७ ॥ ६ ॥

दुरितमिभगमो[1]ऽहं पूर्विकार्प्यक्रमो हं-त्यसमतमशमो[2]ऽहंकारजिद्यः समोहम्[3] ।
कृतकरणदमो हन्[4]तास्तलोभं नुमोऽहं-मतिहतमसमोहं[5] तं सुपार्श्वं तमोहम् ॥ ७ ॥

अव०—गजगतिः १ । पूर्वोत्तरभागयोरेकाक्षरत्वेऽपि यमकत्वाद्यतिभङ्गेऽपि दोषाभावः । निरुपमतमप्रशमः २ ।

---

* इनः सूर्यः

मोहसहितं ३। हन्तेति निश्चयादौ ४। अहंमतिः अज्ञानं तां हरतीति तं ५। असम ऊहो विमर्शो यस्य तम् ६ ॥७॥

समतृणमणिभावं ज्ञातनिःशेषभावं, प्रहतसकलभावप्रत्यनीकप्रभाव ।
कृतमदपरिभावं श्रीश चन्द्रप्रभावं, द्विजपतितनुभाव त्यक्तकामस्वभाव ॥ ८ ॥

अव०—भावोऽभिप्रायः (१)। भावा धर्मास्तिकायादयः। "भावोऽभिप्रायवस्तुनोः" इत्यनेकार्थवचनात् (२)।प्रभावः प्रतापः (३)। परिभावः पराभवः (४)। भव्यानिति गम्यं चन्द्रवच्छरीरस्य (प्र)भावः तद्वर्णत्वात् स्वरूपं यस्य सः(५)।८।

जिनपतिसुविधे यः स्यात्त्वदाज्ञाविधेय–प्रवण इह विधेयैः प्रस्फुरद्भागधेयै।
त्रिजगदनपिधेयश्लाघसन्नामधेय, श्रयति शुभविधेयस्तं लसद्रूपधेय ॥ ९ ॥

अव०—विधेयं कार्यं तत्करणे प्रवणः ( १ )। विधेयो विनयस्थः ( २ )। स्यात् ( ३ )। भागधेयं भाग्यं (४)। त्रिजगति अनपिधेया आच्छादयितुमशक्या श्लाघा सन्नामधेयं च यस्य सः ( ५ )। शुभभाग्यं । रूपमेव रूपधेयं यस्येति । अत्र नामधेयभागधेय ( नामरूपभागाद्धेयः ७–२–१५८ ) इति स्वार्थे धेयप्रत्ययः॥ ९ ॥

य इह निहतकामं मुक्तराज्यादिकामं, प्रणतसुर निकामं त्यक्तसद्भोगं कामम् ।
नमति स निजकामं शीतल त्वां प्रकामं, श्रयतकि तमकामं सार्विका श्रीः स्वकामम् ॥ १० ॥

अव०—काममभिलाषं ( १ )। निकाममतिशयेन ( २ )। भोगा भोग्यवस्तूनि, त्यक्ताः ( ३ )। स्वस्वाभिलाषं

यथा स्यात् ( ४ ) । प्रकाममत्यन्तं ( ५ ) । श्रयतकि भजते । इह "त्यादिसर्वादेः स्वरेष्वन्त्यात्पूर्वोऽक्" (७-३-२९) इत्यनेन श्रयतिक्रियाया अन्त्यस्वरात् प्राक् अक्प्रत्ययः ( ६ )। अकामं निरीहं, यद्वाऽकं दुःखं आमयति पीडयतीति अकामः ( ७ ) । सर्वज्ञसंवन्धिनी ( ८ ) । स्वकामं स्वेच्छया, यद्वा स्वकमात्मीयात्मानमेव आत्मारामीभूतमनस्कः सन्नमति गच्छतीति स्वकामः (९) ॥ १० ॥

विषमविशिखदोषाचारिचारप्रदोषा, प्रतिविधति सदोषाप्यस्य किं कालदोषा ? ।
य इह वदन दोषापार्चिषाऽक्षालि दोषा-ऽतनुकमलमदोषा श्रेयसा शस्तदोषा ॥ ११ ॥

अव०—पञ्चबाण ( १ ) एव रात्रौ चरणशीलत्वाद्दोषाचारी राक्षस ( २ ) स्तस्य चारेण प्रकृष्टो दोषश्छलं यस्यां सा । किं ? प्रतिकूलं करोति ३। तद्विधाने कलि(किल)काल एव दोषा रात्रिः (४) । वदनमेव दोषापश्चन्द्रस्तस्यार्चिषा ( ५ ) । "क्षलण् शौचे" । दोषा एवानल्पकमलानि तेषां मदो विकाशस्तमोषति संकोचनाद्दहति ( ६ ) । श्रेयसा श्रेयांसेन । शस्तौ दोषौ वाहू यस्याः ( यस्य तेन ) ॥ ११ ॥

कृतकुमतपिधानं सत्त्वरक्षावधानं, विहितदमविधानं सर्वलोकप्रधानम् ।
असमशमनिधानं शं जिनं संदधानं, नमत सदुपधानं वासुपूज्याभिधानम् ॥ १२ ॥

अव०—पिधानमाच्छादनं १। अवधानं सावधानं २। विधानं विधिः ३। शोभनतपश्चरणम् ( ४ ) ॥ १२ ॥

ननु सुरवरनाथत्वं ननाथे नृनाथ–त्वमपि विगतनाथः किं त्वहं कुन्थुनाथ !।
प्रकुरु जिन ! सनाथः स्यां यथाऽघोपनाथ, प्रणतविबुधनाथ प्राज्यसच्छ्रीसनाथ॥ १७ ॥

अव०—ननुशब्दो वाक्यारम्भनिश्चयामन्त्रणेषु । इह ततस्त्वं तथेति पदत्रयं गम्यते । "अघं दुःखे व्यसनैनसोः" इत्यनेकार्थवचनात्तानि उपनाथयत्युपतापयतीति । प्राज्या प्रभूता ॥ १७ ॥

अवगमसवितारं विश्वविश्वेशितारं, तनुरुचिजिततारं सद्दयासान्द्रतारम् ।
जिनमभिनमतारं भव्यलोका ! अतारं, यदि पुनरवतारं संसृतौ नेच्छता(था)रम् ॥ १८ ॥

अव०–अवगमेन ज्ञानप्रकाशेन सूर्यं । समग्रविश्वनायकं । तारं कनकं १ । रदरुचिजिततारमिति वा पाठः, तत्र तारा निर्मलमौक्तिकानि नक्षत्राणि १ वा । यदनेकार्थः–"तारा निर्मलमौक्तिके । मुक्ताशुद्धौ उच्चनादे, नक्षत्रे नेत्रमध्ययोरित्यादि" । सान्द्रा बहुला सार्द्रा वा । वीतरागादन्यैस्तारयितुमशक्यं । अवतरणं यदि नेच्छथ ॥ १८ ॥

अनिशमिह निशा१न्तं प्राप्य यः सन्निशा२न्तं, नमति शिवनिशा३न्तं मल्लिनाथं प्रशा४न्तम् ।
अधिपमिह विशा५न्तं श्रीर्गता चावशा६ऽन्तं, श्रयति दुरितशान्तं प्रोज्झ्य नित्यं वशा७न्तम् ॥ १९ ॥

अव०–नितरामुपशमवन्तं १ । प्रभातसमयं २ । कल्याणहेतुत्वात् तन्मयत्वात् कल्याणभवनं । यद्वा शिवं मुक्ति-

पदमेव निशान्तं तत्र लीनत्वात् सदनं यस्य स तथा तं ३। सौम्याकारं ४। इहास्मिन् जन्मनि । विशां नराणां ५। श्रीः अन्तं निकटं ६ । गता प्राप्ता सती । यदनेकार्थः "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपि" इति । तत्पुनः प्रसरानियन्त्रितत्वात् अवशा । दुरितानां शान्तं शमनं यत्र तं । वशा स्त्री वन्ध्यगवी वा ७ । यदाह । "वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि" इति । तस्या अन्तः स्वरूपं चपलत्वं निष्फलत्वं वा तं । प्रोज्झ्य ॥ १९ ॥

न्यदधत मघवा सत्प्रोल्लसच्छुद्धवासं[1], परिहृतगृहवासस्यांसके यस्य वासं[2] ।
विहितशिवनिवासः प्रत्तमोहप्रवासः, स मन इह भवासः सुव्रतो मेऽध्युवास ॥ २० ॥

अव०—स्थापयामास । देवदूष्यत्वात् शोभनं २ । वास इत्यत्र योगः । प्रोल्लसच्छुद्धवासनः १। मन इति "उपान्वध्याङ्वसः" (२—२—२१) इत्यनेनाधारेऽपि द्वितीया । भवमस्यति क्षिपतीति । ध्यानवशात् मम मनसि स्थितः ॥२०॥

समनमयत बालः शात्रवान् योऽप्यबाल—प्रकृतिरसितवालः स्रस्तरुक्चक्रवालः ।
जयतु नमिरबालः सोऽधरास्तप्रवालः, श्वसितविजितबालः पुण्यवल्ल्यालवालः ॥ २१ ॥

अव०—संनमयामास । यो बालोऽपि । यदार्षं "पणया पच्चंतनिवा दंसियमित्ते जिणंमि तेण नमित्ति" । अपरिमितबलत्वात् । श्यामलकुन्तलः । रोगसमूहः । अपगतजाड्यः । श्वसितेन विजितो वालो *हीवेरापरपर्यायो येन ॥२१॥

* ह्रीवेरः भाषायां "सुगंधिवाळो."

जितमदन सुनेमे नाऽनिशं नाथ नेमे, निरुपमशमिनेमे येन तुभ्यं विनेमे ।
निकृतिजलधिनेमेः सीर मोहद्रुनेमे, प्रणिदधति न नेमे तं परा अप्यनेमे ॥ २२ ॥

अव०--अर्हल्लक्ष्मीनायक । निरुपमशमिषु नेमिरिव नेमिः सीमाग्रं । अत्र चक्रधारार्थस्यैव नेमिशब्दस्योपचारात् सीमार्थत्वं । यद्वा कीदृशाय तुभ्यं ? निरुपमशमिने । मे इति मयार्थेऽव्ययं । यदुक्तं वामनालङ्कारवृत्तौ–तेमेशब्दौ निपातेषु त्वया मयेत्येतस्मिन्नर्थे । येन मयेति । मायाम्भोधिमेखलायाः पृथिव्याः *सीरं । ध्यायन्ति द्वौ नञौ प्रकृत्यर्थौ । परा वैरिणः परतीर्थिका वा । परा इति "नवभ्यः पूर्वेभ्यः ( इस्मात्स्मिन्वा )" ( इति ) वा जस इः । अनेमे संपूर्णाः २२

अहिपतिवृतपार्श्वं छिन्नसंमोहपार्श्वं, दुरितहरणपार्श्वं संनमद्यक्षपार्श्वम्[1] ।
अशुभतम उपार्श्वं न्यक्कृतामं[2]† सुपार्श्वं, वृजिनविपिनपार्श्वं श्रीजिनं नौमि पार्श्वम् ।२३।

अव०–छद्मस्थावस्थायां धरणेन्द्रेण निजभोगेन वेष्टितपार्श्वं । छिन्नो विश्वव्यामोहकृत् मायोपायो येन तं । यदभिधानचिन्तामणिवृत्तिः–"पार्श्वमनृजुरुपायः" इति । संनिहितसेवापरदेवानुभावाद्विघ्नविघातकृत्पर्यन्तभुवं १ । इह यक्षशब्दस्य विशेषणं त्वेवं विवक्षितत्वात् (कर्मधारयः) उ ईश्वरस्तस्य समीपं । "उ ईश्वर" इति काव्यकल्पलतावचनात् । तस्य समीपे हि तस्य चन्द्रमौलित्वेन तमसामपास्तिर्विदितैव । सुसंस्थानत्वात् २। पर्शुसमूहम् ॥ २३ ॥

* हलरूप. † अमोरोगः

त्रिदशविहितमानं सप्तहस्ताङ्गमानं, दलितमदनमानं सद्गुणैर्वर्धमानम् ।
अनवरतममानं क्रोधमत्यस्यमानं, जिनवरमसमानं संस्तुवे वर्धमानम् ॥ २४ ॥

अव०—मानं पूजा । कन्दर्पदर्पं । अहंकारं अत्यर्थं क्षिपन्तं । "असूच् क्षेपणे" उपसर्गादस्योहो वा ( ३-३-२५ ) ऽऽत्मने पदं । अनन्यसदृशम् ॥ २४ ॥

अथ सामान्येन जिनान् सिद्धान् स्तौति—

जिन ! तव गुणकीर्तें विश्वविघ्नस्तकीर्तें, विगलदपरकीर्तेर्यद्गिरा धर्मकीर्तेः ।
सितकरसितकीर्तेः शुद्धधर्मैककीर्तेः, स्तुतिमहमचिकीर्तें तां कृतानेङ्गकीर्तेः ॥ २५ ॥

अव०—जिनो वृषभादिवीतरागः श्रीपुण्डरीकादिसिद्धो वा। गुणानां कीर्तनं कीर्तिः । "भावाकर्त्रोः (५-३-१८) घञ् प्रत्ययः तस्मिन् । मम गीः १ ईर्ते प्रसरति। किंभूते ! सर्वविघ्नान् स्तकति प्रतिहन्तीति तस्मिन्। "ष्टक स्तक प्रतिघाते" इति वचनात् । विगलन्ती हीनगुणत्वात् भ्रश्यन्ती अपरेषामन्यदेवानां कीर्तिः ख्यातिर्यस्मात् स तस्य । यद्वा विगलन्ती अपराऽप्रकृष्टाऽपकीर्तिर्यस्मात्स तस्य । यद्यस्माद्धेतोः । ममेति गम्यं। इह गीःशब्दस्य व्यञ्जनान्तस्याप्याकारान्तता भागुरिमतात् ज्ञेया । धर्मनृपप्रासादस्य १ । उक्तं च—"कीर्तिर्यशसि विस्तारे प्रासादे कर्दमेऽपि च" । चन्द्रोज्ज्वलयशसः । शुद्धस्य मिथ्यात्वाद्यनालीढस्य धर्मस्य जीवाजीवादिपदार्थानामुपनिषदो दानादिभेदस्य वा एका यथास्थिततत्वा-

दद्वितीया कीर्तिः कीर्तनं कथनं यस्य यस्माद्वा स तस्य । यदवादि--"धर्मो यमोपमापुण्यस्वभावाचारधन्वसु । सतस-ङ्कर्ऽर्हत्यहिंसादौ न्यायोपनिषदो॑ऽपि ॥ १ ॥" । एवं विविधगुणविशिष्टस्य हे जिन ! तव कीर्तने यन्मम गीः प्रसरति, तदिति गम्यं, तत्तस्माद्धेतोः । तव स्तुतिं अहं अचिकीर्तं विस्तारितवान् । अतिशायिनीं । "कृतं पर्याप्तयुगयोर्विहिते हिंसिते फले" इतिवचनात् कृता विनाशिता अर्थात् शोषिता अनंगः कामरस एव कीर्तिः कर्दमो येन तस्य २ । "कृतण् संशब्दने" । "कृतः कीर्तिः इति ( ४-४-१२२)" कीर्तादेशः । चुरादिभ्यो णिच्(३-४-१७)प्रत्ययः । अद्यतनी आत्मनेपदं । "णिश्रिद्रुस्रु०" ( ३-४-५८ ) इति ङप्रत्ययः । 'द्विर्धातुः परोक्षाङे०' (४-१-१) । "व्यञ्जनस्यानादेर्लुक्" ( ४-१-४४ ) 'कङश्चजू' ( ४-१-४६ ) 'ह्रस्वः' ( ४-१-३९ ) । अङ् धातोः" "णेरनिटि" ४-३-८३ । इवर्णादे-र(अवर्णस्येवर्णादिनैदोदरल् १—२—६ ) चन्द्रव्याकरणे णिगन्तानामुभयपदित्वविधानादात्मनेपदम् ॥ २५ ॥

विगलितवृजिनानां नौमि राजीं जिनानां, सरसिजनयनानां पूर्णचन्द्राननानाम् ।
गजवरगमनानां वारिवाहस्वनानां, हतमदमदनानां मुक्तजीवासनानाम् ॥ २६ ॥

अव०—मुक्ताश्च ते जीवाश्च मुक्तजीवास्तेष्वासना स्थितिर्येषां तेषां । यदार्षं "जत्थ एगो सिद्धो तत्थ य अणंता भवक्खयविमुक्कत्ति" ॥ २६ ॥

अविकलकलताराप्राणनाथांशुतारा, भवजलनिधितारा सर्वदाऽविप्रतारा ।
सुरनरविनता रात्वार्हती गीर्बतारा–दनवरतमितारा ज्ञानलक्ष्मीं सुतारा ॥ २७ ॥

अव०—अविकलाः संपूर्णाः कला यस्य स चासौ ताराप्राणनाथश्च तदंशुवत् तारा दीप्रा(प्ता) । तारयतीति । अव-ल्किका । रातु ददातु । वेगात् । गतारिवृन्दा १। मनोज्ञा ॥ २७ ॥

नयनजितकुरङ्गीकां सुधारोचिरङ्गी–मिह किल मुहुरङ्गीकृत्य चित्तान्तरङ्गी ।
स्मरति हि सुचिरं गीर्देवतां यस्तरङ्गी, कुरुत इममरं गीत्यादिकृद्बन्धुरं गीः ॥ २८ ॥

“नयनजितकुरंगीमिन्दुसद्रोचिरङ्गी” इति पाठान्तरं
अव०—ऋन्नित्यदितः कच् (७–३–१७१) समासान्तः । ध्यानसन्तानबहुलजलप्रसरयोगात्तरङ्गाः सन्त्यस्य सः। वा । मुहुर्वारं वारं। चित्तान्तः । अंगीकृत्य। प्राणी । निरन्तरं । मनोज्ञं । कुरुते गीः॥ २८ ॥ गीतिरार्याविशेषःसा आदिर्येषां तानि गीत्यादीनि च्छन्दांसि तानि कुर्वन्ति ये कवयस्तेषां मध्ये

॥ इति श्रीचतुर्विंशतिजिनस्तुतयोऽष्टयमकमया अवचूरिसमेताः श्रीधर्मघोषसूरिकृताः ॥

। श्रीधर्मवर्धनगणिविरचितम् ।

# । समस्याबद्धभक्तामरस्तोत्रम् ।

( श्रीवीरस्तुतिगर्भितम् )

श्रीआदीशस्तुतिर्यत्र, स्तोत्रं भक्तामराभिधम्। श्रीमानतुङ्गराचार्यै–र्विहितं सुप्रभावयुक् ॥१॥
तत्काव्यानां समस्तानां, तुर्यतुर्यांह्रिसंग्रहैः। समस्यापूरणाच्छ्रेष्ठं, स्तवं वीरजिनेशितुः ॥ २ ॥
राज्यर्द्धिवृद्धिनामानं, चक्रे श्रीधर्मवर्धनः। संक्षिप्तरूपां तट्टीकां, स्वोपज्ञां च सुबोधिकाम् ॥३॥

राज्यर्द्धिवृद्धिभवनाद्भवने पितृभ्यां, श्रीवर्धमान इति नाम कृतं कृतिभ्याम् ।
यस्याद्य शासनमिदं वरिवर्ति भूमा–वालम्बनं भवजले पततां जनानाम् ॥ १ ॥
श्रीआर्षभिः प्रणमति स्म भवे तृतीये, गर्भस्थितं तु मघवाऽस्तुत सप्तविंशे ।
यं श्रेणिकादिकनृपा अपि तुष्टुवुश्च, स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम्॥२॥ ( युग्मम् )

व्याख्या–कविर्वक्ति । किलेति निश्चितं । अहमपि तं जिनेन्द्रं स्तोष्ये । तमिति कं ? यत्तदोरभिसंवन्धात् श्रीआर्षभिर्भरतचक्रवर्ती यं प्रथमं पूर्वं प्रणमति स्म । ऋषभस्यापत्यमार्षभिः । स्मयोगे भूतार्थता वक्तव्या, प्रणमति स्मेति

प्रणामं चकार । कदा ? तृतीये भवे । इह किल संप्रदायः—श्रीवीरस्य सप्तविंशतिर्भवाः, तत्र तृतीये मरीचिभवे भरतेन पृष्टे श्रीऋषभदेवेन प्रोक्तं "मरीचिरयं मत्पौत्रः, स चतुर्विंशतितमतीर्थकरो भविष्यति" इति श्रुत्वा वन्दनीयोऽयं "जे अ भविस्संतणागए काले" इति मत्वा भरतः प्रणमति स्म । "त्वंताथादी न पूर्वगौ" इतिवचनात्तुशब्दोऽपरसंबन्धार्थः । गर्भस्थितं तु यं सप्तविंशे भवे मघवा शक्रः अस्तौत् । ऋषभदत्तभार्याया देवानन्दाब्राह्मण्याः कुक्षौ गर्भरूपेण स्थितं हीनकुलावतारत्वेन चलितासनः शक्रो यं ( गर्भस्थितं ) अवधिना दृष्ट्वा हृष्टः सन् ( शक्रः ) सिंहासनात् समुत्थाय नमोत्थुणमितिस्तोत्ररचनयाऽस्तुत, ततः शक्रस्तवो जातः, सोऽद्यापि सर्वसंघेन पठ्यते । च पुनः, श्रेणिकादिकनृपा अपि यं तुष्टुवुः, विद्यमानस्य श्रीवीरजिनेशस्य मुख्यो नृपो भक्तः श्रीश्रेणिकः । यदाह—"सेणियनिवसिद्धाइयदेवीमायंगजक्खकयसेवेत्ति" । श्रेणिकादिकाः आदिशब्दात् कोणिकोदायनादीनां ग्रहणं । श्रेणिकादिकाश्च ते नृपाश्च श्रेणिकादिकनृपाः । यं वीरं तुष्टुवुः स्तवनां चक्रुः, तमहमपि स्तोष्ये इति । अपिशब्दोऽत्रान्याकर्षणद्योतनार्थः । तमिति कं ? प्रथमं । ननु श्रीआदिजिनेशस्तुतौ प्रथममिति विशेषणं स्पष्टं, चतुर्विंशतितमस्यार्हतः कथं प्रथममिति विशेषणं चरितार्थं स्यात् ? इत्यत आह—प्रथा विस्त(स्ता)रा मा लक्ष्मीः शोभा वा यस्य स प्रथमः । न च सर्वतीर्थकृतां सामान्यमदो विशेषणमिति वाच्यं, मातृपितृभ्यां त्रिशलासिद्धार्थाभ्यां यस्य वर्धमान इति नाम कृतं । कस्मात् ? भवने स्वकीयवेश्मनि राज्यर्द्धिभवनात् । राज्यं स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गवलानि चेति सप्ताङ्गं, तद्रूपा ऋद्धिः, तस्या वृद्धिर्भवनराज्यर्द्धिवृद्धिभवनं तस्मात् राज्यर्द्धिवृद्धिभवनात्, धनधान्यहिरण्यकोशकोष्ठागारादिसर्वर्द्धिवृद्धेर्वर्धमान इति नाम

विहितं । किंविशिष्टाभ्यां पितृभ्यां ! कृतिभ्यां सुकृतवद्भ्यां धामवद्भ्यां वा । पुनर्यस्य वर्धमानस्य अद्य प्रत्यक्षे पञ्चमारके काले, इदं वर्तमानं, शासनं आज्ञावचनं, भूमौ पृथिव्यां, वरिवर्ति सर्वोत्कृष्टतया वर्तते । किंविशिष्टं शासनं ? भवजले संसारजलनिधौ, पततां निमज्जतां, जनानां मनुष्याणां, आम्लवनमवलंबनरूपमित्यर्थः । अत एव राज्यर्द्धिवृद्धि-(भवन)त्वात्प्रवर्तमानशासनत्वाच्च प्रथा विस्तरा मा लक्ष्मीः शोभा वा यस्य(स) प्रथमस्तं प्रथममिति; एतद्विशेषणं श्रीवर्धमानस्वामिनः शासनाधीश्वरस्य सत्फलितार्थं प्रतिभाति । इति काव्यद्वयार्थः ॥ २ ॥

अथ तृतीयकाव्ये श्रीभगवतो महावीरस्वामिनो वलाधिक्यमाह–

वीर ! त्वया विदधताऽऽमलिकीं सुलीलां, बालाकृतिश्छलकृदारुरुहे सुरो यः ।
तालायमानवपुषं त्वदृते तमुच्च,–मन्यः क इच्छति जनः सहसा ग्रहीतुम् ॥ ३ ॥

व्याख्या–हे वीर ! त्वया आमलिकीं, सुलीलां शोभनक्रीडां, विदधता कुर्वता, यः सुर आरुरुहे यो देवस्त्वया आरूढः यत्स्कन्धे त्वया चटितमित्यर्थः । किंविशिष्टः सुरः ? छलकृत् छद्मकारकः । पुनः किंविशिष्टः सुरः ? बालाकृतिः बालवदाकृतिः आकारो यस्य सः । तं सुरं, त्वदृते त्वद्विना, अन्यो जनो ग्रहीतुं स्वायत्तीकर्त्तुं क इच्छति ? न कोऽपीत्यर्थः । किंविशिष्टं तं? उच्चं। कीदृशं? तालायमानवपुषं तालस्तृणराजस्तद्वदा(तमिवा)चरति तालायते,तालायते(इति तालायमानं) तत्तादृशं वपुः शरीरं यस्य स तालायमानवपुस्तं तालायमानवपुषं । ऋते योगे पञ्चमी (श्री२–१–४)। त्वत् इति पञ्चम्या एकवचनं । ऋते इति विनार्थेऽव्ययं । अत्र भगवत आमलिकीक्रीडाप्रबन्धो ज्ञेयः ॥ ३ ॥

अथ चतुर्थकाव्येन श्रीभगवतो विद्याधिक्यमाह—

शक्रेण पृष्टमखिलं त्वमुवक्थ यत्त,—जैनेन्द्रसंज्ञकमिहाजनि शब्दशास्त्रम् ।
तस्यापि पारमुपयाति न कोऽपि बुद्ध्या, को वा तरीतुमलमम्बुनिधिं भुजाभ्याम् ॥ ४॥

व्याख्या—हे वीर! लेखशालाग्रहणावसरे शक्रेणेन्द्रेण पृष्टं, अखिलं समस्तं, यत्त्वमुवक्थ सदुत्तराणि ऊचिवान्, तदिहास्मिन् लोके जैनेन्द्रसंज्ञकं शब्दशास्त्रं व्याकरणमजनि जातं । जिनश्चेन्द्रश्च तौ देवते अस्येति जैनेन्द्रं । इन्द्रश्चन्द्रः काशिकृत्स्नेत्य ( त्याद्य ) ष्ट महावैयाकरणाः, तैस्तैः कृतं तन्नामकं व्याकरणं अजनि समुत्पन्नमित्यर्थः । कोऽपि जनस्तस्यापि शब्दशास्त्रस्य पारं बुद्ध्या नोपयाति, गहनार्थत्वात् । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—वेति पक्षान्तरे, अम्बुनिधिं समुद्रं भुजाभ्यां तरीतुं कः क्षमोऽलं कः समर्थः ? न कोऽपीत्यर्थः ॥ ४ ॥

उपदेशाधिक्यमाह—

धर्मस्य वृद्धिकरणाय जिन ! त्वदीया, प्रादुर्भवत्यमलसद्गुणदायिनी गौः ।
पेयूषपोषणपरा वरकामधेनु—र्नाभ्येति किं निजशिशोः परिपालनार्थम् ? ॥ ५ ॥

व्याख्या—हे जिन! त्वदीया गौर्वाणी धर्मस्य वृद्धिकरणाय प्रादुर्भवति। किंलक्षणा गौः? अमलान्निर्मलान् सतः समीचीनान् गुणान् ददातीत्येवंशीलाऽमलसद्गुणदायिनी। उक्तमर्थं द्रढयति—वरा प्रधाना कामधेनुः निजशिशोः स्ववत्सस्य परिपालनार्थं

किं नाभ्येति संमुखं किं न समागच्छति ? समागच्छत्येव । किंविशिष्टा वरकामधेनुः ? पेयूषपोषणपरा पेयूषमभिनवं पयस्तेन पोषणं तस्मिन् परा तत्परा । "धेनुस्तु नवसूतिका" इति हैमः । भगवतो वाणी कामधेनुरित्यर्थः ॥ ५ ॥

कर्मक्षये भगवतो नाम्नो माहात्म्यमाह—

छिद्येत कर्मनिचयो भविनां यदाशु, त्वन्नामधाम किल कारणमीश ! तत्र ।
कण्ठे पिकस्य कफजालमुपैति नाशं, तच्चारुचूतकलिकानिकरैकहेतुः ॥ ६ ॥

व्याख्या—हे ईश ! हे स्वामिन् ! यद्यस्माद्धेतोः भविना संसारिणां कर्मनिचयः कर्मसमूहः आशु शीघ्रं छिद्येत छेदं प्राप्नुयात् तत्र किलेति निश्चितं त्वन्नामधाम कारणं, तव नाम त्वन्नाम तदेव धाम तेजः तदेव हेतुः, दृष्टान्तमाह—पिकस्य कोकिलस्य कण्ठे कफजालं यन्नाशमुपैति हानिं प्राप्नोति तत्, चारुचूतकलिकानिकरैकहेतुः चारुर्मनोहरो यश्चूत आम्रस्तस्य कलिकानिकरो मञ्जरीसमूहः स एव एकोऽद्वितीयो हेतुरद्वितीयं कारणं । हेतुशब्दोऽजहल्लिंगः ॥ ६ ॥

भगवता मिथ्यात्वं हतं, तदन्यदेवेषु स्थितमित्याह—

देवार्यदेव ! भवता कुमतं हतं त,—न्मिथ्यात्ववत्सु सततं शतशः सुरेषु ।
संतिष्ठतेऽतिमलिनं गिरिगह्वरेषु, सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

व्याख्या—हे देवार्यदेव ! हे वर्धमान ! । "देवार्यो ज्ञातनन्दनः" इति हैमः । यद्भवता त्वया कुमतं कुत्सितमतं हतं

तत् शतशो "बह्वादेः शस्" शतसहस्रादिसंख्येषु सुरेषु मिथ्यात्ववत्सु मिथ्यात्वमस्ति येषु ते मिथ्यात्ववन्तस्तेषु, संतिष्ठते निरन्तरं तिष्ठति । किंविशिष्टं कुमतं? अतिमलिनं महामलीमसं । केषु किमिव ? गिरिगह्वरेषु सूर्यांशुभिन्नमन्धकारमिव, गिरीणां पर्वतानां गह्वराणि गुहास्थानानि तेषु सूर्यस्यांशुभिर्भिन्नं सूर्यकिरणैः प्रहतमन्धकारमिव ॥ ७ ॥

भगवतो नाम्न आधिक्यमाह—

त्वन्नाम वीर इति देव ! सुरे परस्मिन्, केनापि यद्यपि धृतं न तथापि शोभाम् ।
प्राप्नोत्यमुत्र मलिने किमृजीषपृष्ठे, मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ॥ ८ ॥

व्याख्या—हे देव ! वीर इति त्वदीयं नाम केनापि जनेन परस्मिन् सुरेऽन्यस्मिन् देवे यद्यपि धृतं द्विपञ्चाशद्वीराः क्षेत्रपालादय उच्यन्ते (तेषां) वीरनाम स्थापितं, तथापि तन्नाम तस्मिन् शोभां न प्राप्नोति । तत्र दृष्टान्तमाह–अमुत्रामुष्मिन् लोके ननु निश्चितमुदबिन्दुरुदकस्य बिन्दुर्जलकणो मलिने ऋजीषपृष्ठे पिष्टपाकभृत्पीठे किं मुक्ताफलद्युतिं मौक्तिककान्तिं किं उपैति प्राप्नोति ? न प्राप्नोतीत्यर्थः । ऋजीषपृष्टतुल्योऽन्यसुरः तत्र वीर इतिनामोदकबिन्दुर्न शोभत इत्यर्थः ॥ ८ ॥

भगवतो ज्ञानोत्पत्तिविशेषमाह—

ज्ञाने जिनेन्द्र ! तव केवलनाम्नि जाते, लोकेषु कोमलमनांसि भृशं जहर्षुः ।
प्रद्योतने समुदिते हि भवन्ति किं नो, पद्माकरेषु जलजानि विकाशभाञ्जि ? ॥ ९ ॥

॥ १० ॥

व्याख्या–हे जिनेन्द्र ! तव केवलनाम्नि ज्ञाने जाते उत्पन्ने सति लोकेषु स्वर्गमर्त्यपातालेषु कोमलमनांसि लक्षणया भव्यजनानां मनांसि भृशमत्यर्थं जहर्षुर्हर्षं प्रापुः । हीति उक्तमर्थं द्रढयति–प्रद्योतने श्रीसूर्ये समुदिते उद्गते सति पद्माकरेषु तडागेषु जलजानि कमलानि विकाशभाञ्जि विकस्वराणि किं नो भवन्ति ? भवन्त्येव । "प्रद्योतनस्तपन" इति हैमः।९।

सेवके उपकारविशेषमाह–

वादाय देव ! समियाय य इन्द्रभूति,–स्तस्मै प्रधानपदवीं प्रददे स्वकीयाम् ।
धन्यः स एव भुवि तस्य यशोऽपि लोके, भूत्याश्रितं य इह नात्मसमं करोति ॥ १० ॥

व्याख्या–हे देव ! य इन्द्रभूतिर्गौतमगोत्रीयो ब्राह्मणो वादाय वादं कर्तुमनाः समियाय समाजगाम, तस्मै स्वकीयां प्रधानपदवीं भवान् प्रददे । प्रददे इति प्रथमपुरुषैकवचनस्य क्रियाभिसंबन्धाद्भवानिति कर्तृपदं ग्राह्यं । तस्मै इन्द्रभूतये दानपात्रे चतुर्थी । उक्तमर्थं द्रढयति- भुवि पृथिव्यां स एव धन्यो लोकेऽपि तस्य यशस्तस्य कीर्तिः । तस्येति कस्य ? यो ना यः पुमान् आश्रितं सेवार्थमागतं पुरुषं भूत्या ऋद्ध्या कृत्वा आत्मसमं आत्मना तुल्यं करोति, स एव ना । नृशब्दस्य प्रथमैकवचनं । स एव नरो धन्य इत्यर्थः ॥ १० ॥

भगवतो वचनमाधुर्यमाह–

गोक्षीरसत्सितसिताधिकमृ(मि)ष्टमिष्ट,–माकर्ण्य ते वच इहेप्सति नो परस्य ।
पीयूषकं शशिमयूखविभं विहाय, क्षारं जलं जलनिधे रसितुं क इच्छेत् ? ॥ ११ ॥

व्याख्या–हे जिन ! ते तव वचो वचनमाकर्ण्य श्रुत्वा परस्यान्यदेवस्य वचो जनो नो ईप्सति नामुमिच्छति । किंविशिष्टं वचः ? गोक्षीरं दुग्धं सती चासौ सितसिता उज्ज्वला शर्करा ताभ्यां द्वाभ्यामधिकमृ(मि)ष्टं विशेषेण मृ(मि)ष्टं मधुरतरं । पुनः ( किंभूतं वचः ? इष्टं वाञ्छितं ) । उक्तमर्थं द्रढयति–शशिमयूखविभं चन्द्रकिरणतुल्यं निर्मलं पीयूषकममृतं विहाय त्यक्त्वा जलनिधेर्लवणसमुद्रस्य क्षारं जलं रसितुं स्वादितुं क इच्छेत् को वाञ्छेत् ? न कोऽपीत्यर्थः पीयूषमेव पीयूषकं स्वार्थे कप्रत्ययः । यद्वा पीयूषतुल्यं कं जलं अमृतजलं पीत्वा क्षारं जलं रसितुं रस आस्वादने (इति धातोः ) तुम्प्रत्यये इडागमे च रसितुमिति सुपाठः । अशितुमिति पाठोऽज्ञानमूलकः, भोजनार्थाभावात् ( सुधाशिनो देवा इति भवत्येव ) ॥ ११ ॥

भगवतो रूपाधिक्यमाह–

अङ्गुष्ठमेकमणुभिर्मणिजैः सुरेन्द्रा, निर्माय चेत्तव पदस्य पुरो धरेयुः ।
पूष्णोऽग्र उल्मुकमिवेश स दृश्यते वै, यत्ते समानमपरं न हि रूपमस्ति ॥ १२ ॥

व्याख्या–हे जिन ! सुरेन्द्रा देवेन्द्रा अणुभिः परमाणुभिः एकमङ्गुष्ठं निर्माय नूतनं निष्पाद्य चेद्यदि तव पदस्य चरणस्य पुरोऽग्रे धरेयुः तव चरणस्याङ्गुष्ठेन तुल्यताकरणाय स्थापयेयुः । किंविशिष्टैरणुभिः ? मणिजैर्मणयश्चन्द्रकान्तादिरत्नानि तेषु जाता मणिजास्तैर्मणिजैः रत्नोद्भूतैः परमाणुभिरित्यर्थः । हे ईश सोऽङ्गुष्ठो वै इति निश्चितं पूष्णः सूर्यस्याग्रे उल्मुकमिवालातमिव दृश्यते । यद्यस्मात्कारणाद्धीति निश्चितं, ते तव समानमपरं रूपं नास्ति, त्वत्तुल्यरूपोऽन्यो नास्तीत्यर्थः ॥ १२ ॥

भगवद्दर्शने मिथ्यात्वं नोद्घटतीत्याह–

उज्जाघटीति तमसि प्रचुरप्रचारं, मिथ्यात्विनां मतमहो न तु दर्शने ते
काकारिचक्षुरिव वा न हि चित्रमत्र, यद्वासरे भवति पाण्डुपलाशकल्पम् ॥ १३ ॥

व्याख्या–हे जिन ! मिथ्यात्विनां मतं तमस्यज्ञाने उज्जाघटीति अतिशयेन उद्घटति प्रकटीभवतितरां । किंभूतं मतं ? प्रचुरो बहुलः प्रचारो विस्तारो यस्य तत् प्रचुरप्रचारं । अहो इत्याश्चर्ये । तन्मिथ्यात्विनां मतं ते तव दर्शने न तु उज्जाघटीति, दर्शने सम्यक्त्वे भगवतोऽवलोकने वा मिथ्यात्वस्य विलयात् । हीति निश्चितं । अत्र चित्रं न किञ्चित्तत्राश्चर्यं नेत्यर्थः । यद्यस्माद्धेतोः काकारिचक्षुर्वासरे पाण्डुपलाशकल्पं भवति काकानां काकपक्षिणामरिः शत्रुर्घूकस्तस्य चक्षुर्नेत्रं दिवसे पाण्डु पाण्डुरवर्णं यत्पलाशपत्रं तेन कल्पं तुल्यं भवतीत्यर्थः । वासरे घूकचक्षुषो निस्तेजस्त्वात्, तमसि प्रचुरप्रचारत्वात्॥१३॥

कषायभङ्गे भगवतो बलवत्त्वमाह–

वन्या द्विपा इव सदैव कषायवर्गा, भञ्जन्ति नूतनतरूनिव सर्वजन्तून् ।
सिंहातिरेकतरसं हि विना भवन्तं, कस्तान्निवारयति संचरतो यथेष्टम् ॥ १४ ॥

व्याख्या०–हे स्वामिन् ! कषायवर्गाः कषति दहति प्राणि ( नो ) नां जीवा(निति)नामिति कषः संसारस्तस्यायो लाभो येभ्यस्ते कषायाः क्रोधादयस्तेषां वर्गाः, "वर्गस्तु सदृशां स्कन्धः" इति हैमः । यद्वा तद्गुणो वर्गः अनन्तानु-

||

वन्ध्यादिभेदचतुष्टयेन चतुर्गुणिताः कषायवर्गा, वन्या द्विपा इव सर्वजन्तून् नूतनतरूनिव भञ्जन्ति । कदा ? सदैव सर्वस्मिन् काले । हीति निश्चितं । भवन्तं विना त्वां विना तान् यथेष्टं संचरतो द्विपान् को निवारयति ? । किंविशिष्टं भवन्तं ? सिंहातिरेकतरसं सिंहादतिरेकं अधिकं तरः पराक्रमो यस्य स तं सिंहातिरेकतरसम् ॥ १४ ॥

उपसर्गसहने भवगतो दृढतां दर्शयन्नाह—

द्विट्सङ्गमेन महतामुपसर्गकाणां, या विंशतिस्तु ससृजे जिन नक्तमेकम् ।
चित्तं चचाल न तया तव झञ्झया तु, किं मन्दराद्रिशिखरं चलितं कदाचित् ॥ १५ ॥

व्याख्या—हे जिन ! द्विट्सङ्गमेन द्वेष्टीति द्विट् अभव्यत्वान्नित्यद्वेषी यः सङ्गमो देवस्तेन या महतामुपसर्गकाणां विंशतिः ससृजे चक्रे । कियत्कालं एकनक्तं एकरात्रिं यावत् । तयोपसर्गविंशत्या तव चित्तं न चचाल नो चलति स्म । दृष्टान्तमाह—झञ्झया तु वृष्टियुक्तमहावातेन मन्दराद्रिशिखरं किं कदाचिच्चलितं ? न चलितमित्यर्थः । मन्दरो मेरुः स चासावद्रिश्च पर्वतस्तस्य शिखरं "धूलीपिपीलियाओ" इत्याद्युपसर्गाणां विंशतिः ॥ १५ ॥

भगवानपूर्वदीपोऽस्तीत्याह—

निःस्नेह निर्दश निरञ्जन निःस्वभाव, निष्कृष्णवर्त्म निरमत्र निरङ्कुशेश ।
नित्यद्युते गतसमीरसमीरणात्र, दीपोऽपरस्त्वमसि नाथ जगत्प्रकाशः ॥ १६ ॥

व्याख्या—हे नाथ ! हे स्वामिन् ! अत्र त्वं अपरो दीपोऽसि दीपयति प्रकाशयति वस्तुजातमिति दीपः । किमपरत्वमिति संबोधनगर्भितविशेषणैर्भिन्नलक्षणत्वमाह—हे ईश ! हे निःस्नेह ! निर्गतः स्नेहात् यः स निःस्नेहस्तत्संबोधनं हे निःस्नेह । "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः३-१-४७) इति समासः । अन्यो दीपः सस्नेहो भवति । हे निर्दश निष्क्रान्तो दशाया इति निर्दशस्तत्संबोधनं हे निर्दश । "अवस्था तु दशा स्थितिः" इति हैमः । अन्यः सदशो वर्तिसहितः । हे निरञ्जन ! अन्यस्तु साञ्जनः । हे निःस्वभाव निर्द्रव्यभाव, अन्यस्तु सद्रव्यभावः । कृष्णवर्त्म मलिनमार्गस्तस्मात् कृष्णवर्त्मनो निष्क्रान्तो निःकृष्णवर्त्मा टाडकेति डप्रत्यये हे निःकृष्णवर्त्म, अन्यः कज्जलसद्भावात् सकृष्णवर्त्मा । हे निरमत्र अमत्रवर्जित, अन्यस्त्वमत्रसहितः । हे निरङ्कुश, अन्यस्तु साङ्कुशः । हे नित्यद्युते, अन्यस्त्वनित्यद्युतिः । हे गतसमीरसमीरण गतं समीरेण वायुना समीरणं कम्पनं यस्य तत्संबोधनं, अन्यो वायुकम्पसहितो भवेत् । अत एव विपरीतविशेषणैरत्र लोके त्वं जगति प्रकाशो यस्य स जगत्प्रकाशः, अन्यस्तु गृहमात्रप्रकाशोभवतीति त्वमपरोऽधिक इत्यर्थः ॥ १६ ॥

१ एतत्सूत्रस्यापरिमितविषयकत्वात् "निष्कृष्णवर्त्म" इत्यादौ डप्रत्ययाऽयोगः, किंच "कृष्णवर्त्मनो निष्क्रान्तो निष्कृष्णवर्त्मा इतिव्युत्पादने तत्पुरुषविषयत्वात् बहुव्रीहिविषयकडप्रत्ययाविधानं चिन्त्यमेव"

||

अथ सूर्यादप्यतिशयवान् भगवानित्याह—

विस्तारको निजगवां तमसः प्रहर्ता, मार्गस्य दर्शक इहासि च सूर्य एव ।
स्थाने च दुर्दिनहतेः करणाद्विजाने, सूर्यातिशायिमहिमाऽसि मुनीन्द्र ! लोके ॥ १७ ॥

व्याख्या—हे जिन ! इहास्मिन् लोके त्वमेव सूर्योऽसि विशेष्यसंगतः । एवकारोऽन्ययोगव्यवच्छेदार्थः । त्वदन्यस्तादृक् सूर्यो नास्तीत्यर्थः । हेतुगर्भितविशेषणान्याह—किंभूतस्त्वं सूर्यश्च ? निजगवां स्ववाणीनां स्वकिरणानां च विस्तारकः । पुनः तमसोऽज्ञानस्यान्धकारस्य च प्रहर्ता । पुनर्मार्गस्य दर्शकः, सन्मार्गप्रकाशकत्वात् त्वं सूर्य एवासि, तत् स्थाने युक्तं । स्थाने इति योग्यतार्थेऽव्ययं । हे मुनीन्द्र ! अहं तु विजाने विज्ञानतया वितर्केऽसि त्वं सूर्यातिशायिमहिमा सूर्यादतिशायी महिमा माहात्म्यं यस्य स सूर्यातिशायिमहिमा । कस्मात् ? दुर्दिनहतेः करणात् दुर्दुष्टं दिनं दुर्दिनं तस्य हननं हतिस्तस्याः करणात् । सूर्यपक्षे दुर्दिनं मेघजं तमः तद्धन्तुं सूर्यो न शक्नोतीति सूर्यादपि भगवानधिक इति व्यतिरेकालङ्कारः ॥ १७ ॥

---

१ अत्र "गोस्तत्पुरुषात्" इत्यनेन टप्रत्ययप्राप्तिः 'नच' निजाश्च ता गावश्चेति विशेषणविशेष्यैकार्थ्ये कथं तत्पुरुषप्रयुक्तटप्रत्ययापत्तिरिति-वाच्यं "विशेषणं विशेष्येणैकार्थे कर्मधारयश्च" इत्यनेन तस्यापि तत्पुरुषसंज्ञाविधानात्, तथापि समासान्तशासनस्याऽनित्यत्वाश्रयणेन समाधेयम् ॥

अथ चन्द्रादपि त्वद्यशोऽधिकमित्याह—

प्रह्लादकृत्कुवलयस्य कलानिधानं, पूर्णश्रियं च विदधच्च यशस्त्वदीयम् ।
वर्वर्ति लोकबहुकोकसुखङ्करत्वा—द्विद्योतयज्जगदपूर्वशशाङ्कबिम्बम् ॥ १८ ॥

व्याख्या—हे जिन ! तवेदं त्वदीयं यशोऽपूर्वशशाङ्कबिम्बं वर्वर्ति अतिशयेन वर्तते । किंविशिष्टं शशाङ्कबिम्बं ? कुवलयस्य प्रह्लादकृत् प्रमोदकारि, यशस्तु कुवलयस्य भूवलयस्य प्रह्लादकृत् । कलानिधानं द्वयोस्तुल्यविशेषणं । पुनः किं कुर्वत् ? पूर्णश्रियं विदधत्, द्वयमपि तुल्यं, विशेषणैस्तुल्यत्वात् । यशसः किमपूर्वत्वं ? तत्र हेतुमाह—लोका एव बहवः कोकाश्चक्रवाकास्तेषां सुखंकरत्वात् । भगवद्यशः श्रुत्वा लोकाः कोका इव सुखं प्राप्नुवन्ति । अत एव त्वदीययशोऽपूर्वशशाङ्कबिम्बमिति तात्पर्यार्थः । पुनः किंभूतं तत् ( यशः ) ? जगत् विद्योतयत् विश्वं विशेषेण द्योतयत्॥१८॥

भगवता ( यत् ) सांवत्सरिकं दानं दत्तं तदाह—

यद्देहिनां जिनवराब्दिकभूरिदानै—र्दौःस्थ्यं हतं हि भवता किमु तत्र चित्रम् ।
दुर्भिक्षकष्टदलनात् क्रियते सदौप—कार्यं कियज्जलधरैर्जलभारनम्रैः ॥ १९ ॥

व्याख्या—हे जिनवर ! भवता त्वया आब्दिकभूरिदानैर्वार्षिकस्वर्णदानैर्यद्देहिनां प्राणिनां दौःस्थ्यं दारिद्र्यं हतं । हीति निश्चितं । तत्र चित्रं किमु ? तत्र चित्रं आश्चर्यं, न किमपीत्यर्थः । दृष्टान्तमाह—जलभारनम्रैर्जलधरैर्मेघैः सत्समीचीनं

उपकारस्य भाव औपकार्यं कियत् ( क्रियते विधीयते ) का संख्या यस्य तत् कियत् वहुतरमित्यर्थः । कस्मात् ? दुर्भिक्षकष्टदलनात् सुभिक्षकरणात् ॥ १९ ॥

भगवच्चरणदर्शने फलाधिक्यमाह—

याद्दक् सुखं भवति ते चरणेऽत्र दृष्टे, ताद्दक्परर्भुवदनेऽपि न देहभाजाम् ।
प्राप्ते यथा सुरमणौ भवति प्रमोदो, नैवं तु काचशकले किरणाकुलेऽपि ॥ २० ॥

व्याख्या—हे वीर ! याद्दक् सुखं ते तव चरणे पादे दृष्टे सति भवति ताद्दक् परोऽन्यो य ऋभुर्देवस्तस्य वदनेऽपि मुखेऽपि दृष्टे सति न । "सुरनिर्जरदेवतर्भु" इति हैमः । केषां ? देहभाजां देहं शरीरं भजन्ते सेवन्ते इति देहभाजः प्राणिनस्तेषां । दृष्टान्तमाह—यथा सुरमणौ चिन्तामणौ प्राप्ते सति प्रमोदो हर्षो भवति । किरणाकुलेऽपि किरणैराकुले व्याप्तेऽपि चाकचिक्याधिकेऽपि काचशकले एवं न सुरमणाविव प्रमोदो न भवति । तव चरणश्चिन्तामणिः परदेवमुखं ( च ) काचशकलमिति स्पष्टार्थः ॥ २० ॥

भक्तो भगवत्सेवां प्रार्थयन्नाह—

एवं प्रसीद जिन येन सदा भवेऽत्र, त्वच्छासनं लगति मे सुमनोहरं च ।
त्वत्सेवको भवति यः स जनो मदीयं, कश्चिन्मनो हरति नाथ ! भवान्तरेऽपि ॥ २१ ॥

व्याख्या–हे जिन ! त्वमेवं प्रसीद प्रसन्नो भव, येनात्र भवे सदा सर्वदा मे मम त्वच्छासनं त्वदाज्ञा सुमनोहरं लगति। च पुनर्हे नाथ ! यस्त्वत्सेवको भवति स कश्चिज्जनो मदीयं मनो भवान्तरेऽपि हरति, भवान्तरे त्वत्सेवको मम मनोहरो लगतीत्यर्थः ॥ २१ ॥

भामण्डलं जिन ! चतुर्मुख दिक्चतुष्के, तुल्यं चकासदवलोक्य सभा व्यमृक्षत् ।
सूर्यं समा अपि दिशो जनयन्ति किंवा, प्राच्येव दिग्जनयति स्फुरदंशुजालम् ॥ २२ ॥

व्याख्या–हे जिन ! हे चतुर्मुख ! समवसरणे भगव(भव)तश्चत्वारि मुखानि देवै[1]र्विनिर्मितानि दृश्यन्ते। सभा परिषद् भामण्डलं दिक्चतुष्के तुल्यं चकासत्तुल्यं दीप्यमानमवलोक्य व्यमृक्षद्विमर्शमकार्षीत्। किं व्यमृक्षदित्याह–सूर्यं समा अपि सर्वा अपि चतस्रोऽपि दिशो जनयन्ति, किं वा प्राच्येव पूर्वदिगेव जनयति? किंभूतं सूर्यं ? स्फुरदंशुजालं दीव्यत्किरणसमूहम् ॥२२॥

लोकैर्यः शिवः शिव इति ध्यायते स भगवानेवेत्याह–

शम्भुर्गिरीश इह दिग्वसनः स्वयम्भू–र्मृत्युञ्जयस्त्वमसि नाथ महादिदेवः ।
तेनाम्बिका निजकलत्रमकारि तत्त्व–ज्ञान्यः शिवः शिवपदस्य मुनीन्द्र पन्थाः ॥२३॥

व्याख्या–हे नाथ ! इहास्मिन् लोके शं सुखं भवत्यस्मादिति शम्भुः । गिरां वाणीनामीशो गिरीशो । दिगेव वसनं यस्य

---

१ त्रीणि देवनिर्मितानि एकं च स्वाभाविकमित्यत्र विशेपार्थो बोध्यः ।

स दिग्वसनः। स्वयमात्मना भवतीति स्वयम्भूः । मृत्युं जयतीति मृत्युञ्जयः। स त्वमसि त्वमेवासि। ईदृग्नामा यो महादेवस्तेन अम्बिका अम्बा एव अम्बिका वाक्छलेन माता, सा निजकलत्रमकारि सा रुद्रेण स्त्रीकृतेति व्यङ्ग्यार्थः । तत्तस्मात्कारणात्त्वदन्यस्त्वत्तोऽपरः हे मुनीन्द्र ! शिवः शिवपदस्य पन्थाश्च न, नास्तीत्यर्थः ॥ २३ ॥

सर्वशास्त्राध्ययनादपि सम्यक्त्वमधिकमिति दर्शयन्नाह–

जानन्ति यद्यपि चतुर्दश चारु विद्या, देशोनपूर्वदशकं च पठन्ति सार्थम् ।
सम्यक्त्वमीश ! न धृतं तव नैव तेषां, ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४ ॥

व्याख्या–हे जिन ! ये चतुर्दश विद्या जानन्ति । यतः "षडङ्गी वेदाश्चत्वारो, मीमांसान्वीक्षिकी तथा । धर्मशास्त्रं पुराणं च, विद्या एताश्चतुर्दश ॥ १ ॥" च पुनर्देशोनपूर्वदशकं देशेनोनं पूर्वाणां दशकं च सार्थमर्थयुक्तं पठन्ति, परं तव सम्यक्त्वं यैर्न धृतं तेषां ज्ञानस्वरूपं सन्तः सज्जनाः अमलं निर्मलं नैव प्रवदन्ति नैव कथयन्ति । यत उक्तं नन्दिवृत्तौ-मिथ्यादृष्टिः उत्कृष्टतः श्रुतमवगाहमानो देशोनानि दश पूर्वाण्यवगाहते, परिपूर्णानि त्ववगाढुं न शक्नोति। एतावच्छास्त्राधीत्यपि सम्यक्त्वाभावेऽज्ञानवानेवेत्यर्थः ॥ २४ ॥

पुरुषोत्तमोऽयं वीर एवेत्याह–

नृणां गणा गुणचणाः पतयोऽपि तेषां, ये ये सुराः सुरवराः सुखदास्तकेऽपि ।
कृत्वाञ्जलिं जिन ! चरिक्रति ते स्तुतिं त–द्व्यक्तं त्वमेव भगवन् पुरुषोत्तमोऽसि ॥ २५ ॥

व्याख्या—हे जिन! इक्ष्वाकुनामनि कुले ते तव उद्भवो जन्म विराजते। किंविशिष्टे कुले ? विमले निर्मले (विशाले) विस्तीर्णे। पुनः (किंविशिष्टे) सद्भिः समीचीनै रत्नैः पुरुषरत्नै राजत इत्येवंशीलस्तस्मिन् सद्रत्नराजिनि। कस्मिन् कस्य क इव ? तुङ्गोदयाद्रिशिरसि उच्चोदयाचलशिखरे सहस्ररश्मेः सूर्यस्य प्रकटप्रकाश इव प्रसिद्धतेज इव। किंविशिष्ट उद्भवः ? दोषाणामपहारस्य करणं विधानं यस्य सः। उभयत्र विशेषणं तुल्यमिति ॥ २९ ॥

स्नानोदकैर्जिन(र्जनि)महे सुरराजिमुक्तै-र्गात्रे पतद्भिरपि नूनमनेजमानम्।
दृष्ट्वा भवन्तममराः प्रशशंसुरीश-मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ॥ ३० ॥

व्याख्या—जिन(जनि)महे जन्ममहोत्सवे सुरराजिमुक्तैर्देवश्रेणिमुक्तैः स्नानोदकैः। गात्रे शरीरे पतद्भिः। नूनं निश्चितं। भवन्तमीशं अनेजमानमकम्पमानं दृष्ट्वाऽमरा देवाः प्रशशंसुः प्रशंसन्ति स्म। कमिव ? शातकौम्भं सौवर्णं सुरगिरेर्मेरोरुच्चैस्तटमिव, निश्चलतया वर्णेन च तुल्यत्वात् ॥ ३० ॥

ये त्रिप्रदक्षिणतया प्रभजन्ति वीरं, ते स्युर्नरा अहमिवाद्भुतकान्तिभाजः।
वप्रत्रयं वददिति प्रविभाति तेऽत्र, प्रख्यापयत्रिजगतः परमेश्वरत्वम् ॥ ३१ ॥

व्याख्या—हे स्वामिन्! इहास्मिन् लोके ते तव वप्रत्रयं सालत्रयं प्रविभाति दीव्यति। किं कुर्वत् ? इति वदत्। इतीति किं ? ये नरा मनुष्यास्त्रिप्रदक्षिणतया प्रदक्षिणात्रयेण वीरं प्रभजन्ति सेवन्ते, तेऽद्भुतकान्तिभाजः स्युः। क

इव ? अहमिव यथाऽहमद्भुतकान्तिभागस्मि । अर्थवशाद्विभक्तिपरिणामो "लिङ्गभेदं तु मेनिरे" इत्यलङ्कारः[1] । वप्रत्रयं किं कुर्वत् ? त्रिजगतः परमेश्वरत्वं प्रख्यापयत् प्रथयत् ॥ ३१ ॥

भगवत्स्मरणे सुरसांनिध्यमाह—

कान्तारवर्त्मनि नराः पतिताः कदाचि—द्दैवात्क्षुधा च तृषया परिपीडिताङ्गाः ।
ये त्वां स्मरन्ति च गृहाणि सरांसि भूरि—पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥ ३२ ॥

व्याख्या—हे जिन! कदाचित्समये कान्तारवर्त्मनि अरण्यमार्गे पतिता दैवात् क्षुधा बुभुक्षया (च पुनः) तृषया परिपीडिताङ्गा ये नरास्त्वां स्मरन्ति त्वत्स्मरणं कुर्वन्ति । तत्र कान्तारवर्त्मनि देवा विबुधा गृहाणि च पुनः सरांसि परिकल्पयन्ति रचयन्ति । किंविशिष्टानि गृहाणि ? भूरिः प्रचुरा पद्मा लक्ष्मीर्येषु तानि । किंविशिष्टानि सरांसि ? भूरिपद्मानि वहुकमलानि ॥ ३२ ॥

भगवच्चित्तस्थिरतामाह—

संनिश्चला जिन ! यथा तव चित्तवृत्तिः, कस्यापि नैवमपरस्य तपस्विनोऽपि ।
यादृक् सदा जिनपते स्थिरता ध्रुवस्य, तादृक्कुतो ग्रहगणस्य विकाशिनोऽपि ॥ ३३ ॥

---

१ वाग्भटाऽलङ्कारः ।

भगवन्नामतः सर्पभयमपि विलीयत इत्याह--

ऊर्ध्वस्य ते बिलमुखे वचनं निशम्य, यच्चण्डकौशिकफणी शमतामवाप ।
तत्साम्प्रतं तमपि नो स्पृशतीह नाग–स्त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ३७ ॥

व्याख्या--हे जिन ! यस्मात्कारणात्ते तव बिलमुखे ऊर्ध्वस्य ( ऊर्ध्वं स्थितस्य ) वचनं निशम्य श्रुत्वा चण्डकौशिकः फणी सर्पः शमतां क्रोधत्यागतामवाप । तत्तस्माद्धेतोः सांप्रतमपि नागः सर्पस्तं न स्पृशति तत्स्पर्शमात्रं ( अपि ) न करोति । तमिति कं ? यस्य पुंसो मनुष्यस्य हृदि त्वन्नामनागदमनी वर्तते । न च (तव) नामनागदमनी जटिकाविशेषः ३७

भगवद्विहारे ईतयो न भवन्तीत्याह–

तुर्यारके विचरसि स्म हि यत्र देशे, तत्र त्वदागमत ईतिकुलं ननाश ।
अद्यापि तद्भयमहर्मणिधामरूपा–त्त्वत्कीर्तनात्तम इवाशु भिदामुपैति ॥ ३८ ॥

व्याख्या--हे जिन! तुर्यारके चतुर्थारके यत्र देशे त्वं विचरसि स्म विजहर्थ, तत्र देशे त्वदागमतस्तवागमनात्। ईतिकुलं सप्तेतयस्तासां कुलं समूहो ननाश नाशं प्राप । यतः--"अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । स्वचक्रं परचक्रं च, सप्तैता ईतयः स्मृताः ॥ १ ॥" अद्यापि ताभ्यो भयं तद्भयं त्वत्कीर्तनादाशु शीघ्रं भिदां नाशमुपैति । कस्मात् किमिव ? अहर्मणिधामरूपात् सूर्यप्रशस्ततेजसस्तम इव ध्वान्तमिव । यथा तमो भिदां नाशमुपैति तथेतिकुलमिति ॥ ३८॥

॥

निर्विग्रहाः सुगतयः शुभमानसाशाः, सच्छुक्लपक्षविभवाश्चरणेषु रक्ताः ।
रम्याणि मौक्तिकफलानि च साधुहंसा–स्त्वत्पादपङ्कजवनाश्रयिणो लभन्ते ॥ ३९ ॥

व्याख्या—हे जिन ! तव पादावेव पङ्कजे कमले तदुपलक्षितं वनमाश्रयन्तीति त्वत्पादपङ्कजवनाश्रयिणः । शीलेऽर्थे णिन् प्रत्ययः । ईदृशाः साधुहंसा रम्याणि मौक्तिकफलानि लभन्ते । साधुपक्षे मोक्षफलानि, हंसपक्षे मुक्ताफलानि । कीदृशाः साधवो हंसाश्च ? विग्रहान्निष्क्रान्ता निर्विग्रहाः सुगतयः शुभमानसे सुचित्ते मानससरोवरे ( च ) आशा, इच्छा येषां ते शुभमानसाशाः । साधवः कीदृशाः ? सत्समीचीनो यः शुक्लपक्षो मातृपितृपक्षस्तत्र विभव उद्भवो येषां ते । अथवा सम्यक्त्वलाभात् शुक्लपक्षोऽपार्धपुद्गलसंसारस्तत्र विभवो जन्म येषां ते, तत्परतो भ्रमणाभावात् , सच्छुक्लपक्षविभवाः । हंसास्तूज्ज्वलपक्षविभवाः । पुनश्चरणेषु चारित्रेषु रक्ताः साधवः। हंसास्तु चलनेषु रक्ता रक्तवर्णाः । उभयत्र विशेषणानि तुल्यानि ॥ ३९ ॥

भगवद्वचनश्रद्धानात्कामितप्राप्तिर्भवतीत्याह—

संसारकाननपरिभ्रमणश्रमेण, क्लान्ताः कदापि दधते वचनं कृतं ते ।
ते नाम कामितपदे जिन देहभाज–स्त्रासं विहाय भवतः स्मरणाद्व्रजन्ति ॥ ४० ॥

व्याख्या–हे जिन ! देहभाजः प्राणिनः कदापि ते वचनं कृतं सत्पदं धरन्ति। ते नामेति कोमलामन्त्रणे, कामितपदे

वाञ्छितस्थाने व्रजन्ति गच्छन्ति। किंविशिष्टास्ते ? संसारकाननपरिभ्रमणश्रमेण क्रान्ताः क्लेदं (शं) प्राप्ताः। किं कृत्वा ? त्रासमाकस्मिकं भयं विहाय। कस्मात् ? भवतः स्मरणात्, ईप्सितपदप्राप्तौ भवत्स्मरणमेव हेतुरित्यर्थः ॥ ४० ॥

भगवद्रूपं दृष्ट्वा सुरूपा अपि स्वरूपमदं मुञ्चन्तीत्याह—

सर्वेन्द्रियैः पटुतरं चतुरस्रशोभं, त्वां सत्प्रशस्यमिह दृश्यतरं प्रदृश्य।
तेऽपि त्यजन्ति निजरूपमदं विभो ! ये, मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ॥ ४१ ॥

व्याख्या—हे विभो ! ये मर्त्या मकरध्वजतुल्यरूपाः कामदेवसदृशरूपा भवन्ति, तेऽपि त्वां प्रदृश्य दृष्ट्वा निजरूपमदं त्यजन्ति। किंभूतं त्वां ! सर्वेन्द्रियैः पटुतरं स्पष्टतरं। चतुरस्रशोभं समचतुरस्रसंस्थानराजिनं। पुनः सद्भिः सज्जनैः (प्रशस्यः) प्रशंसार्हः सत्प्रशस्यस्तं। इहास्मिन् लोके दृश्यतरं, दर्शनायार्हो दृश्यः, अतिशयेन दृश्यो दृश्यतरस्तम् ॥ ४१ ॥

निर्बन्धनं जिनं ध्यायन्तो निर्बन्धना भवन्तीत्याह—

छित्त्वा दृढानि जिन ! कर्मनिबन्धनानि, सिद्धस्त्वमापिथ च सिद्धपदं प्रसिद्धम्।
एवं तवानुकरणं दधते तकेऽपि, सद्यः स्वयं विगतबन्धभया भवन्ति ॥ ४२ ॥

व्याख्या—हे जिन ! त्वं दृढानि कर्मनिबन्धनानि च्छित्त्वा प्रसिद्धं सिद्धपदं मोक्षपदमापिथ प्राप्तवान्। एवममुना

प्रकारेण ये तवानुकरणं त्वद्रूपसमाचरणं दधति धरन्ति, ते एव तके स्वार्थेऽकृप्रत्ययः, तकेऽपि जनाः सद्यस्तत्कालं स्वयं स्वतो विगतवन्धभया वन्धनभयरहिता भवन्ति ॥ ४२ ॥

भगवत्स्तोत्राध्ययनात्सर्वोपद्रवनाशो भवतीत्याह—

न व्याधिराधिरतुलोऽपि न मारिरारं, नो विड्वरोऽशुभतरो न दरो ज्वरोऽपि ।
व्यालोऽनलोऽपि न हि तस्य करोति कष्टं, यस्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥

व्याख्या—हे जिन ! यो मतिमान् इमं तावकं स्तवमधीते, तस्य मतिमतो व्याधिराधिश्च कष्टं न करोति । "व्याधिः शरीरजा पीडा स्यादाधिर्मानसी व्यथा" इति विवेकः । किं विशिष्टो व्याधिस्तथाधिः ? अतुलो महत्तरः । च पुनर्मारिर्मरकोपद्रवः, पुनः आरं अरीणां समूह आरं, कष्टं न करोति । अपि पुनर्व्यालो दुष्टगजः सर्पो वाऽनलो वह्निः तस्य कष्टं न करोति ॥ ४३ ॥

भगवत्स्तवो मौक्तिकहारः कण्ठे धार्य इत्याह—

त्वत्स्तोत्रमौक्तिकलतां सुगुणां सुवर्णां, त्वन्नामधामसहितां रहितां च दोषैः ।
कण्ठे य ईश कुरुते धृतधर्मवृद्धिस्तं मानतुङ्गमवशा समुपैति लक्ष्मीः ॥ ४४ ॥

व्याख्या—हे ईश ! हे स्वामिन् ! यः पुमान् त्वत्स्तोत्रमौक्तिकलतां कण्ठे कुरुते कण्ठे दधाति । तव स्तोत्रं त्वत्स्तोत्रंत देव

मौक्तिकलता तां । किं विशिष्टां मौक्तिकलतां ? शोभना गुणा औदार्यमाधुर्यादयो यस्याः सा तां, सुगुणां सुदवरकां च । पुनः कीदृशीं ? शोभना वर्णा अक्षराणि नतिनि च (सितादयः) यस्याः सा तां सुवर्णां मनोज्ञाक्षरां शोभनवर्णां च । पुनस्त्वन्नामधामसहितां । अन्यापि मौक्तिकलता धामसहिता तेजोयुक्ता भवति । च पुनर्दोषैर्दूषणै रहितां, एतादृशीं यः कण्ठे कुरुते किंविशिष्टो यः ? धृता धर्मस्य वृद्धिर्वर्धनं येन स धृतधर्मवृद्धिः, धर्मवर्धन इति कर्तृनामगर्भितं विशेषणं । तं पुरुषं लक्ष्मीः समुपैति समागत्य वृणुते । किंविशिष्टं तं ? मानतुङ्गं मानेन स्वाभिमानेन तुङ्गमुच्चं, अप्राप्तपराभवत्वादखण्डिताभिमानमित्यर्थः । मानतुङ्ग इति भक्तामरस्तोत्रकारकस्य नामगर्भितं विशेषणम् ॥ ४४ ॥

रसगुणमुनिभूमेऽब्दे ( १७३६ )ऽत्र भक्तामरस्यैश्चरमचरमपादैः पूरयन् सत्समस्याः ।
सुगुरुविजयहर्षा वाचकास्तद्विनेयश्चरमजिननुतिं ज्ञो धर्मसिंहो व्यधत्त ॥ १ ॥

॥ इत्युपाध्यायश्रीधर्मवर्धनगणिकृतं श्रीभक्तामरस्तोत्रसमस्यारूपश्रीवीरजिनस्तवनं तद्वृत्तिश्च ॥

---

१ अशुद्धं स्थलमेतत् प्रत्यन्तराभावाच्च कः कर्तुस्तात्पर्यविषयकः शब्द इति न निश्चेतुं शक्यते ।

॥ श्रीभावप्रभसूरिविरचितं ॥

# ॥ श्रीनेमिभक्तामरम् ॥

सटीकम्

श्रीसरस्वत्यै नमः । श्रीइष्टदेवतायै नमः । श्रीगुरुभ्यो नमः ।

नत्वा श्रीपार्श्वनाथाय, गुरवे वाणयेऽपि च । भक्तामरस्तवान्त्यांह्रि–समस्यारचनाश्रितम् ॥ १ ॥
नेमिसंबोधनं काव्यं, कृतं यन्मयका मुदा । तस्य च क्रियते वृत्तिः, श्रीभावप्रभसूरिणा ॥ २ ॥

तत्र प्रथमकाव्ये समुद्रविजयनृपशिवादेवीपुत्रे श्रीनेमिनाथे रचितविवाहसामग्रीशोभिते सपरीवारे विवाहार्थं तोरणसमीपं समागतेऽपि नानाविधपशूनां बृहत्पूत्कारं श्रुत्वा दयां विधाय तान् बन्धनात्प्रमोच्य पश्चाद्गते सति उग्रसेनराजपुत्री राजीमती प्रियवियोगजं दुःखं प्रकटयन्ती सती नेमिनं संबोधयति–

भक्तामर त्वदुपसेवन एव राजी–मत्या ममोत्कमनसो दृढतापनुत्त्वम् ।
पद्माकरो वसुकलो वसुखोऽसुखार्ता–वालम्बनं भवजले पततां जनानाम् ॥ १ ॥

टीका–भक्ताः सेवका अमरा देवा यस्य स नेमिस्तस्य संबोधने हे भक्तामर ! हे नेमे ! त्वं मम राजीमत्या आलम्बन-

माधारो भव भवतात्। कस्यां सत्यां ? असुखार्तौ त्वद्विरहलक्षणपीडायां सत्यामित्यन्वयः। भक्तामरेति सातिशयसंबोधनपदत्वेन ये यस्य सेवकास्ते तस्य सेवां कुर्वन्तीत्यतो देवानां पूज्यकत्वा( ज्यत्वा )न्मङ्गलशब्दोपन्यासः कृतो ज्ञेयः। अत्र श्लेषपदत्वात् भक्ताय मल्लक्षणजनाय अमं विरहलक्षणं रोगं राति ददातीति हे भक्तामर ! इति रोषोक्तिसंबोधनमपि। पुनः कथंभूतस्त्वं ? दृढतापनुत् दृढं कठोरं तापं विरहलक्षणं नुदति अपनयतीति दृढतापनुत्। पुनः कथंभूतस्त्वं ? पद्माकरः लक्ष्मीणां खानिः लक्ष्मीवानित्यर्थः। अन्यथा विपरीतस्तु निन्द्यः। यदुक्तं–"वासश्चर्म विभूषणं शवशिरो भस्माङ्गरागः सदा, गौरेकः सच लाङ्गले त्वकुशलः संपत्तिरेतावती। ईशस्येत्यवमत्य याति जलधिं रत्नाकरं जाह्नवी, कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥ १ ॥" पुनः कथंभूतस्त्वं ? वसुकलः वसुषु द्रव्येषु कला यस्य स द्रव्योपार्जनकलावानित्यर्थः। अथवा वसुषु धनरत्नवस्तुषु कला शुद्धाशुद्धपरीक्षणलक्षणा यस्य सः। अथवा वसुषु रत्नेषु उपलक्षणत्वात् ज्ञानदर्शनचारित्रेषु कला दक्षत्वं यस्य स इति। पुनः कथंभूतस्त्वं ? वसुखः वसुभिस्तेजोभिरुपलक्षितः खः सूर्य इव वसुखः तेजसा सूर्यस्वरूपः। एतेन तेजस्वी प्रतापवानित्यर्थः। एतैर्विशेषणैर्गृहस्थताव्यवहारः सुनिर्वाहकर उक्तः। कथंभूताया मम ? उत्कमनस उत्कण्ठितं मनो यस्याः सा उत्कमनास्तस्या उत्कमनसः। कस्मिन् ? त्वदुपसेवने एव तव सेवायामेव। एवकरणं राजीमत्या निजसतीत्वख्यापनार्थं। सुकलत्रेण गृहस्थावासः प्रशस्यत इत्युक्तं। यथाशब्दोऽत्र गम्यः। यथा त्वं जले जडस्वरूपे मार्गे। डलयोरैक्यत्वात्। पततां पातं कुर्वतां जनानां आलम्बनं भवसि ज्ञानमार्गदायकत्वात्। अथवा यथा इ इति संबोधने हे जड! पततां जनानां उपलक्षणत्वात् पतच्छब्दसाहचर्येण पशु-

शब्दगृहीतत्वात् गौरवदानार्थं संमेलितानां पक्षिणां मयूरादीनां अजादीनां चासुखार्तौ सत्यां आलम्बनं भवसि । एतेन पशूपरि दयां कृत्वा त्वं पश्चाद्वलितः, परं विरहपीडिताया ममोपरि दया न धृता इति रोषोक्तिः प्रोक्ता । अथात्र श्लेषत्वात् वहवोऽर्थाः सन्ति । ते केचिल्लिख्यंते—हे नेमे ! त्वं ममालम्बनं भव । व इति उपमायां। क इव ? पद्माकरस्त- डाग इव । यथा तडागोऽसुखार्तौ तृषाक्रान्तायामवस्थायां अथवा उष्णर्तुपीडायां सत्यां जले जलनिमित्तं पतताम- गच्छतां जनानां मनुष्यादीनां आलम्बनं भवति । कथंभूतः पद्माकरः ? सुकलः सुष्ठु शोभनानि कानि जलानि लाति गृह्णातीति सुकलः स्वच्छजलधारक इत्यर्थः। पुनः कथंभूतः पद्माकरः ? व इति वरुणः, वात् वरुणात्सुखं यस्य स वसुखः, जलस्वामित्वात्, यो यस्य स्वामी तस्य स्वामिनः सुखं भवतीति लोकोक्तेः। अथवा हे नेमे ! त्वं आलम्बनं भव। क इव ? व इत्युपमायां सुकल इव, यथा सुकलः "अर्थव्ययज्ञः सुकलः" इति हैमवचनात्। दाता भोक्ता पुरुषः । असुखार्तौ दारिद्र्यपीडायां सत्यां पततामागच्छतां जनानां याचकादीनां आलम्बनं भवति, दातृत्वात्। कथंभूतः सुकलः ? पद्माकरः लक्ष्मीवान् । वसुखः वसुभिस्तेजोभिः खः सूर्य इव तेजस्वीत्यर्थः। अथवा हे नेमे ! त्वं आलम्बनं भव । क इव ? सुकल इव । यथा सुष्ठु शोभनाः कला यस्य स सुकलश्चन्द्रः । असुखार्तौ सत्यां जलेऽर्थात् अमृतपाने । निमित्तार्थे सप्तमी । अमृतपाननिमित्तं पततां जनानां अर्थात् चकोरपक्षिणां आलम्बनं भवति, तानमृतपानेन पुष्णातीत्यर्थः । कथंभूतः सुकलश्चन्द्रः? पद्मायाः शोभाया आकरः पद्माकरः शोभायुक्तः । पुनः कथंभूतः सुकलश्चन्द्रः ? वसुखः वो रुद्रस्तस्य सुखकृत् चन्द्रभूषणत्वात् । अथवा वसुभिः किरणैरुपलक्षितं खं निजमण्डलं यस्य स वसुखः । अथवा

सुखः सूर्य इव, यथा सुष्ठु शोभनः खः सूर्यः सुखः उप-
हे नेमे ! त्वं आलम्बनं भव । क इव ? व इति उपमायां । सुखः सूर्य इव, यथा सुष्ठु शोभनः खः सूर्यः सुखः उप- जले उपलक्षणत्वान्नीराश्रयसमीपे । आधारे सप्तमी
रागादिमुक्तः शुभसूर्यः । असुखार्तौ रात्रौ सञ्जातविरहपीडायां सत्यां जले उपलक्षणत्वान्नीराश्रयसमीपे । आधारे सप्तमी विरहविनाशकत्वात् । चक्रवाकमिथुनं हि रात्रा-
तत्र वसतां पततां जनानां अर्थात् चक्रवाकपक्षिणां आलम्बनं भवति, विरहविनाशकत्वात् । चक्रवाकमिथुनं हि रात्रा- सूचितं । दृढतापनुत् एतद्वि-
ववश्यमेव विश्लेषं गच्छति, सूर्योद्गमे तु संयोगं प्राप्नोति, तवापीदृशं कर्तुमुचितमिति सूचितं । दृढतापनुत् एतद्वि- हैमानेकार्थ्यां महीपकोषे
शेषणं सर्वत्र योज्यमिति । पतत् पक्षी "पतत्रिपतत्पतङ्गाः" इति हैमः । "खः सूर्ये" इति हैमानेकार्थ्यां महीपकोषे बिन्दाविन्द्रिये चन्द्रम-
च । "वो वाते वरुणे रुद्रे सान्त्वने" इत्येकाक्षरनिघण्टौ । खं चन्द्रमण्डलं, यतः "खं नृपे गगने बिन्दाविन्द्रिये चन्द्रम-
ण्डले" इत्यादि एकाक्षरकोषे महीपसत्के । इति प्रथमकाव्यार्थः ॥ १ ॥

पित्रोर्मुदे सह मयोपयमं यदीन्द्र!, नोरीकरिष्यसि तदा तव काऽत्र कीर्तिः ।
जग्राह यो हि गृहिकर्म विधाय वृत्तं, स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम् ॥ २ ॥

टीका—हे इन्द्र ! हे स्वामिन् ! यदि चेत्त्वं उपयमं विवाहं न ऊरीकरिष्यसि। कया सह ? मया सह। कस्यै ? पित्रो-
र्मातरपितरयोर्मुदे हर्षाय । तदाऽत्र लोके तव का कीर्तिः कीदृग्यशः ? न कापि । अथवा कुत्सिता कीर्तिरित्यर्थः,
साभ्यसूयवचनत्वात् । एतदेव द्रढयति—हीति निश्चितं यो मरुदेवासुतः, वृत्तं दीक्षां, जग्राह गृह्णाति स्म । किं कृत्वा ?
गृहिकर्म विधाय विवाहादिभोगकृत्यं कृत्वा । यत्तदोर्नित्यसंबन्धात् । किलेति सत्ये । अहं तं प्रथमं जिनेन्द्रं ऋषभं
स्तोष्ये । अपिशब्दादन्येऽपि विचक्षणजनाः स्तोष्यन्ते । अथवा प्रथमं जिनेन्द्रं ऋषभं, अपिशब्दादन्यानपि ईदृशान् जिनान्

स्तोष्ये स्तुतिमार्गं नेष्यामि । अतस्त्वां विहाय अन्ये सर्वेऽपि जिनाः कीर्तनीया इति काकुः । अत्र मल्लिस्तु स्त्रीवेदत्वादनपेक्षितः इति प्रथमोऽर्थः । अथ द्वितीयोऽर्थः—यः अहि इति, अत्र अकारप्रश्लेषः, न विद्यते हे संबोधनं "हे कमलनेत्रेऽत्रैहि, मम समीपं निषीद" इत्यादिलक्षणं तत् अहि । नपुंसके संध्यक्षराणां ह्रस्वत्वं । एवंविधं गृहिकर्म विधाय अपरिणीतत्वात् स्त्रीवर्जितं गृहिकार्यं कृत्वा यो भवान् नेमिः वृत्तं जग्राह । किलेत्यसत्ये । अहं अपिशब्दादन्यो मत्सदृशो जनः प्रथमं प्राक् । तं जिनेन्द्रं त्वां अरिष्टनेमिं स्तोष्ये, किलाव्ययस्यालीकार्थत्वात्तव स्तुतिं न करिष्यामीत्यर्थः । इति द्वितीयोऽर्थः । अथ तृतीयोऽर्थः—यः कृष्णः अहिः सूर्य इव "अहिः सूर्य" इति महीपानेकार्थकोषे । तेजस्वी यो गृही तस्य कर्म विहारिकार्यं तस्य या विधा क्रिया भोगविलासादिका तस्या आयो लाभो यस्मिंस्तत् एवंविधं यद्वृत्तं शीलं जग्राह । एतेन जनार्दनेन षोडशसहस्रसंख्यामितकलत्राणि परिणीतानि, तैः सह विलासो लोकैः प्रशस्यगृहस्थावासो गीयते । किलेति सत्ये । अहमपि तं प्रथमं जिनेन्द्रं नारायणस्वामिनं स्तोष्ये । "मार्ज्जजिनौ कुमोदक" इति हैमः । एतेन एककलत्रनिर्वाहेऽपि त्वं असमर्थोऽसि, भीरुकत्वेन निरुद्यमत्वादिति काकुः इति तृतीयोऽर्थः । अथ लौकिकदृष्टान्तेनापि चतुर्थोऽर्थः—य ईश्वरः हि निश्चितं गृहिकर्म विधाय हिमाचलपुत्रीं परिणीय वृत्तं भिक्षाटनलक्षणं जग्राह भिक्षाटनं चकार । अहमपि प्रथमं जिनेन्द्रं वृषाङ्कं (शिवं) स्तोष्ये । त्वत्तो वामदेवः श्रेष्ठः, यतो भिक्षाटनेनापि स्त्रीनिर्वाहकारकोऽभवत्, उमोपरि परमप्रीतित्वात् । गौरीशिवयोरप्रतिमप्रीतिप्रवर्तनं प्रसिद्धमिति । त्वं तु महत्यां समृद्धौ सत्यामपि स्त्रीविमुखोऽसि, तेन तव काऽत्र कीर्तिरिति निश्चितं । जिन

ईश्वरः स चासौ इन्द्रः स्वामी च जिनेन्द्रः । यतः—"कन्दर्पवीरे निहते जिनेन, किं दुःखितं बाढमभूत्तदानीम् । इदं मया स्पष्टतरं तु प्रोक्तं, न वेत्ति मोघं वहते स गर्वम् ॥ १ ॥" इति द्वितीयकाव्यार्थः ॥ २ ॥

रम्यं गृहं च रमणीं रमणीयराढां, भोगान् समं प्रवरबन्धुजनैरपास्य ।
तारुण्ययुग् यदुपते ! त्वदृतेऽङ्ग दीक्षा-मन्यः क इच्छति जनः सहसा ग्रहीतुम् ॥ ३ ॥

टीका—अङ्ग इति संबोधने । हे यदुपते ! कोऽन्यो जनः सहसा शीघ्रं दीक्षां ग्रहीतुमिच्छति वाञ्छति ? न कोऽपीत्यर्थः । कस्मात् ? त्वत् ऋते त्वां विना । किं कृत्वा ? रम्यं गृहं । च पुनः रमणीयराढां मनोहरशोभां, एवंविधा रमणीं प्रियां । पुनः भोगान् । अपास्य त्यक्त्वा । कैः समं ? बन्धुजनैः सहोदरादिभिर्जनैः समं सार्धं । कथंभूतोऽन्यो जनः ? तारुण्ययुग् यौवनयुक्त इति ॥ ३ ॥

रोद्धुं क्षमो जिन ! करोऽपि ममाबलाया-स्त्वामुद्बलं हि भवदागमजातवीर्यः ।
न स्यान्मुनीश ! लवणेशगृहीतशक्तिः, को वा तरीतुमलमम्बुनिधिं भुजाभ्याम् ॥ ४ ॥

टीका—हीति निश्चितं हे जिन ! ममाबलाया अपि करो हस्तस्त्वां रोद्धुं क्षमः समर्थो वर्तते । ( कथंभूतः करः ? भवदागमजातवीर्यः भवत आगम सिद्धान्त आगमनं वा तेन जातमुत्पन्नं वीर्यं बलं यस्य सः ) । कथंभूतं त्वां ? उद्बलं उत्कटपराक्रमं । वा इति पक्षान्तरं करोति—हे मुनीश ! को नरोऽम्बुनिधिं समुद्रं तरीतुमलं समर्थो न स्यात् ? अपि तु

स्यादेवेत्यर्थः । काभ्यां ? भुजाभ्यां । कथंभूतः कः ? लवणेशेत्यादि– लवणसमुद्रसुरात् गृहीता प्राप्ता शक्तिः सामर्थ्यं येन स इति ॥ ४ ॥

भद्रं चकर्थ पशवेऽपि यथा तथा त्वं, तूर्णं कृपापर ! ममैह्यसुरक्षणार्थम् ।
रिष्टाश्रितां खलु धवो महिलां समन्तुं, नाभ्येति किं निजशिशोः परिपालनार्थम्? ॥५॥

टीका—हे कृपापर ! हे दयाप्रवीण ! तथा त्वं तूर्णं क्षिप्रं मम असुरक्षणार्थं प्राणरक्षणाय एहि आगच्छ। यथा त्वं भद्रं कल्याणं चकर्थ करोषि स्म । कस्मै ? पशवेऽपि हरिणादितिर्यग्जातयेऽपि दृष्टान्तेन । खलु इति निश्चितं । धवः पतिः महिलां भार्यां किं नाभ्येति संमुखं न गच्छति ? अपि ( तु ) गच्छत्येव । किमर्थं ? निजशिशोः स्वकीयबालकस्य परिपालनार्थं । कथंभूतां महिलां ? समन्तुं सापराधामपि । पुनः किंभूतां महिलां ? रिष्टाश्रितां कष्टाक्रान्तामिति "रिष्टं क्षेमेऽशुभे च" इत्यनेकार्थः ॥ ५ ॥

तीक्ष्णं वचोऽप्यभिहितं मयका हितं यत्, तत्ते भविष्यतितरां फलवृद्धिसिद्ध्यै ।
यद्धेलिधाम तपतीश ! भृशं निदाघे, तच्चारुचूतकलिकानिकरैकहेतुः ॥ ६ ॥

टीका—हे ईश ! मया एव मयका यत् तीक्ष्णं भवदीयकर्णपुटानीप्सितमपि वचः हितं हितकृत् अभिहितं कथितं । तद्वचः कर्तृपदं ते तव फलवृद्धिसिद्ध्यै भविष्यतितरां, फलस्य राज्यादिसमृद्धिसुखलक्षणोदयस्य प्रवर्धननिष्पत्तये इति ।

दृष्टान्तमाह—यत्तदित्यव्ययौ हेत्वर्थे । यत् हेलिधाम सूर्यकिरणः, भृशमत्यर्थं, निदाघे उष्णकाले तपति, तत् चारवः मनोहराः चूतस्याम्रस्य कलिका मञ्जर्यस्तासां निकरैकहेतुः समूहैककारणमस्ति इति स्पष्टम् ॥ ६ ॥

आगच्छ कृच्छ्रहर हृच्छयचित्रपुङ्ख—लक्षीकृतां कृशतनुं क्षम रक्ष मां त्वम् ।
त्वत्सङ्गमे क्षयमुपैष्यति मेऽतिदुःखं, सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

टीका—हे कृच्छ्रहर ! कष्टनिवारक त्वं आगच्छ अत्रैहि । हे क्षम ! हे समर्थ ! त्वं मां रक्ष मम संयोगकवचं धारयेत्यर्थः यतः कथंभूतां मां ? हृच्छयः कन्दर्पस्तस्य चित्रपुङ्खो बाणस्तेन लक्षीकृता वेध्यीकृता तामिति । "लक्षं व्याजशरव्ययोः" इति हैमानेकार्थः । पुनः कथंभूतां मां ? कृशतनुं दुर्बलशरीरां । हे जिन ! त्वत्सङ्गमे तव संयोगे सति ममातिदुःखं कर्तृपदं । क्षयं विनाशमुपैष्यति प्रयास्यति । किमिव ? अन्धकारमिव, यथाऽन्धकारं क्षयमुपैति । कथंभूतमन्धकारं ? सूर्यांशुभिन्नं सत् । पुनः कथंभूतमन्धकारं ? शार्वरं रजनीसंबन्धि इति ॥ ७ ॥

उद्यत्तडिद्घनघनाघनगर्जितेऽहि—भुग्भाविते नभसि नौ नभसीन देहे ।
घर्मोत्कटादिरिव दन्तुरतां विषण्णो, मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ॥ ८ ॥

टीका—हे इन ! हे स्वामिन् ! ननु निश्चितं नौ आवयोर्देहे शरीरे उदबिन्दुः जलकणः मुक्ताफलद्युतिमुपैति मौक्तिककान्तिं प्राप्नोति । कस्मिन् सति ? नभसि आकाशे नभसि श्रावणमासे उद्यत्तडिद्घनघनाघनगर्जिते उत्कटविद्युत्सान्द्र-

मेघगर्जारवे सति । कथंभूते ? अहिभुग्भाविते मयूरशब्दमिश्रिते । कस्मात् ? घर्मोत्कटात् उष्मोत्कर्षात् । इव उत्प्रेक्षते। इः कामः दन्तुरतां उन्नतदन्ततामुपैति । कथंभूत इः ? विषादं प्राप्तः । कथंभूतां दन्तुरतां ? मुक्ताफलद्युतिं स्पष्टं । उदकस्योदन् आदेशः तेनोदविन्दुः । उन्नता दन्ता अस्येति दन्तुरस्तद्भावो दन्तुरतेति ॥ ८ ॥

पश्येदृशीति सखिता मदनादरः किं, नृत्यन्मयूरनिकरोऽब्दघटां समीक्ष्य ।
मैत्र्या भवन्ति भगवन् ! प्रभया प्रकर्षं, पद्माकरेषु जलजानि विकाशभाञ्जि ॥ ९ ॥

टीका—हे भगवन् ! हे ज्ञानिन् ! सखिता मैत्री ईदृशी भवति इति त्वं पश्य विलोकय । इतीति किं ? अयं मयूरनिकरः केकिसमूहो नृत्यन् नृत्यं कुर्वन् सन् वर्तते । किं कृत्वा ? अब्दघटां मेघमालां समीक्ष्य विलोक्य । पुनः पद्माकरेषु सरसीषु जलजानि कमलानि विकाशभाञ्जि प्रकाशयुक्तानि भवन्ति । कथं ? प्रकर्षं यथा स्यात्तथेति क्रियाविशेषणं। कया ? प्रभया । कथंभूतया प्रभया ? मैत्र्या मित्रस्य सूर्यस्येयं प्रभा मैत्री तया सूर्यसंबन्धिद्युत्येत्यर्थः । अतः कारणात् हे यादव ! मदनादरः किं ? कोऽर्थः ? त्वया मदनादरो न कर्तव्य इत्यर्थः । मयि विषये न आदरः अनादरः अनासक्त इत्यर्थः । अथवा मयि विषये न नादं शब्दं अनादं अर्थात् मौनं राति ददाति (इति) मदनादरः "हे प्रिये! अहमागतः, त्वं मम समीपमलङ्कुरु" इत्याद्युक्तिरहित इत्यर्थः। अथवाऽकारप्रश्लेषात् अमदने कन्दर्परहिते वस्तुनि आदरोऽभिलाषः किं ? अर्थात् विवाहादि कार्यं मुक्त्वाऽन्यत्रादरः तव न युक्त इत्यर्थः । इत्येवं मदनादरपदस्य बह्वर्थाः सन्ति, स्वयमूह्या इति ॥ ९ ॥

किं त्वं स नैव चल कागतिका तवैषा, जन्याः प्रसूर्जनयिता सहजाश्च जामिः ।
श्यामाऽप्यहं च इति वर्गमिमं विवाह–भूत्याश्रितं य इह नात्मसमं करोति ॥१०॥

टीका–हे चल ! हे चपलस्वभाव ! हे अनवस्थानचित्त ! तव एषा का आगतिका कुत्सितमागमनं वर्तत इत्यर्थः । यदि त्वं नागमिष्यस्तदा वरमभविष्यत्, यतोऽहं सखीनां मध्ये उपहास्यतां गतेति व्यंग्यं । अथवा तवैषा का गतिका का दशाऽवस्था ज्ञानं च वर्तते तव कीदृशी अवस्था कीदृशं ज्ञानं ? अहं न जाने, अग्रे त्वमस्त्रीकत्वात् दुःखी भविष्यसीति काकुः । हे चल स त्वं किं ? अकिञ्चित्करत्वान्निरर्थकोऽसि इति । अथवा हे सना सदा एव चल त्वं किं, किंशब्दोऽत्रकुत्सितार्थः, तेन त्वं कुत्सितोऽसीत्यर्थः। अन्ये जना बालत्वे चपलस्वभावा भवन्ति, त्वं तु सदैव चपल इति हेतोः । यतः—"न क्रोधिनोऽर्थो न शठस्य मित्रं, क्रूरस्य न स्त्री सुखिनो न विद्या। न कामिनां ह्रीरलसस्य न श्रीः, सर्वं तु न स्यादनवस्थितस्य ॥१॥" इति । "सदा सनाऽनिशं शश्वत्" इति हैमः । अथवा हे चल स त्वं किं ना पुरुषः ? अपि तु पुरुषो न असि । नृशब्दस्य ना ( प्रथमैकवचनं ), पौरुषाभावात् । यतः—मार्गितां संपद्यमानां भार्यां न निषेधयतीति क्षत्रियधर्मोऽस्ति, त्वं तु तं धर्मं त्यजसि, निर्लज्जत्वात्, अतोऽहं त्वां पुरुषं न कथयामि इति । विरहपीडितो हि जनः परुषमपरुषं उचितमनुचितमपि सर्वं वाक्यं जल्पति, मोहितत्वेन विवेकाभावात् । अथवा हे चल स त्वं किं नैवासि ? स एव त्वं स्वेच्छाचारी वर्तसे इत्यर्थः । सः कः ? यत्तदोर्नित्यसंबन्धः यो भवान् इह विवाहमण्डपे इति इमं वर्गं स्वजनसमूहं विवाहभूत्याश्रितं विवाहस्य सुवस्त्रभूषणभोजनविलेपनादिसमृद्धियुक्तं न करोति। कथंभूतमिमं वर्गं ? आत्मसममात्मना तुल्यमिति।

इति वर्ग इतीति किं ? जन्या वरयितृमित्राणि "जन्यास्तु तस्य सुहृदः" इति हैमवचनात् । प्रसूर्माता । जनयिता पिता । सहजा भ्रातरः । जामिर्भगिनी कुलस्त्री च । "जामिः स्वसृकुलस्त्रियोः" इति हैमानेकार्थः । अहं श्यामाऽपि नवयौवनापि । चः समुच्चये । इति समस्तस्वजनवर्गमिति । श्लोकः—"श्यामा श्यामेन वर्णेन, श्यामा स्त्री नवयौवना । अप्रसूता भवेच्छ्यामा, श्यामा षोडशवार्षिकी ॥ १ ॥" इति ॥ १० ॥

दृष्ट्वा भवं तमनिमेषविलोकनीयं, नान्यत्र तोषमुपयाति मदीयचक्षुः ।
पीत्वा पयः शशिकरद्युति दुग्धसिन्धोः, क्षारं जलं जलनिधेरशितुं क इच्छेत् ॥ ११ ॥

टीका—हे सुभग! मदीयचक्षुः मम नेत्रं कर्तृपदं । तोषं तुष्टिं नोपयाति न प्राप्नोति । कस्मिन् ? अन्यत्र शुभसांसारिकभोगविलाससुखं विहायान्यत्र मुनिधर्ममार्गे । किं कृत्वा ? तं प्रसिद्धं सुकृतोपेतं भवं संसारं उपलक्षणत्वात् विविधभोगसंयोगलीलाजनितसुखास्वादप्रमोदमेदुरबहुनरनारीरूपं दृष्ट्वा विलोक्य । कथंभूतं भवं ? अनिमेषविलोकनीयं (नेत्र) निमीलनरहितदर्शनीयं । दृष्टान्तमाह—को नरो जलनिधेर्लवणसमुद्रस्य क्षारं जलमशितुं जलपानं कर्तुमिच्छेत्? न कोऽपीत्यर्थः । किं कृत्वा ? दुग्धसिन्धोः क्षीरसमुद्रस्य पयः जलं पीत्वा । किंविशिष्टं पयः ? शशिकरद्युति चन्द्रकिरणधवलमिति । अत्र मुनिधर्ममार्गस्य क्षारजलोपमानं, विविधक्लेशजालसहनत्वात् , सांसारिकसुखस्य तु क्षीरसमुद्रनिर्मलजलोपमानं प्रत्यक्षसुखत्वात् सर्वजनानुभवसिद्धमिति । एतेन पुण्यवतां भोगविलासं दृष्ट्वा मन्मनस्तत्र धावति, त्वं तु तत्र विमुख इति तव मूढत्वमस्तीति । अथ द्वितीयमर्थमाह—हे सुभग! मदीयचक्षुर्नेत्रं तोषं नोपयाति । कस्मिन् ? त्वां

विनाऽन्यत्र वररूपे । किं कृत्वा ? भवन्तं नेमिं दृष्ट्वा । कथंभूतं भवन्तं ? अनिमेषविलोकनीयं स्पष्टं । दृष्टान्तमाह—को नर इत्यादि पूर्ववत् अन्वयः । परं अन्यपुरुषस्य लवणसमुद्रक्षारजलोपमानं, श्रीनेमिनस्तु क्षीर(निधि)जलोपमानमिति ११

राज्ञो महामृगमदाकुलमण्डलस्य, दैत्यारिमार्गगमनस्य तमोऽदितस्य ।
चक्षुष्य चारुचतुराक्षिगतस्य किं च, यत्ते समानमपरं न हि रूपमस्ति ॥ १२ ॥

टीका—किं चेति पक्षान्तरे । कोऽर्थः ? अनन्तरकाव्ये द्वितीयेऽर्धे मदीयचक्षुरन्यत्र तोषं नोपयातीति यदुक्तं तदर्थमेव हेत्वन्तरेण द्रढयति—हे चक्षुष्य ! हे सुभग ! "चक्षुष्यः सुभगः" इत्यभिधानचिन्तामणिवचनात् । अपरं अन्यत् रूपं ते तव समानं न हि अस्ति, भुवने इति शेषः । कथंभूतस्य ते ? राज्ञः राजत इति राजा तस्य महाभूपस्य । पुनः कथंभूतस्य ते ? महामृगेति महामृगा गजास्तेषां मदैर्दानवारिभिराकुलं व्याप्तं मण्डलं देशो यस्य स तस्य । पुनः किंभूतस्य ते ? दैत्येति दैत्यारेर्वासुदेवस्य मार्गे पथि गमनं यस्य स तस्य । अथवा दैत्यारयो देवास्तेषां मार्गे गमनं यस्य स तस्य । एतेन तवाग्रतः कृष्णोऽस्ति, अग्रगा देवाः सेवकाः सन्ति इत्यर्थः । पुनः कथंभूतस्य ते ? तमोभिः पापैरदितोऽखंडितस्तस्य । पुनः कथंभूतस्य ते ? चारवो मनोहराश्चतुरा नरनारीजनास्तेषां अक्षिगतो द्वेष्यस्तस्येति । चक्षुषे हितश्चाक्षुष्यः यं दृष्ट्वा चक्षुः प्रह्लादं प्राप्नोति । अक्षिगतस्तु द्वेषणीयः, "द्वेष्योऽक्षिगतः" इति हैमवचनात् । अत्र विरोधः—यश्चक्षुष्यः सोऽक्षिगतः कथं स्यात् ? परिहारस्तु—चारुचतुराक्षिषु गतः स्थितः स तस्य । ते नेत्रो(त्रैः)परि रक्षन्ति, सादरविलोकनेन वाल्लभ्यत्वादिति । अथवा चारुनिपुणजननेत्रैः सह गतं गमनं यस्य सः "आः रथं व्याघुट्य गतो गतः"

इत्यर्थः । अत्र लुप्तौपम्यत्वात् कथंभूतस्य ते तव कस्येव ? राज्ञश्चन्द्रस्येव, यथा राज्ञश्चन्द्रस्य समानं अपरं रूपं नास्ति। कथंभूतस्य राज्ञ ? महामृगो लक्ष्मस्वरूपहरिणः तस्य मदेन कस्तूरिकया आकुलं मण्डलं यस्य स तस्य । अथवा महामृगशब्देन उपलक्षणत्वात्कस्तूरिकादिसुगन्धद्रव्यैराकुलं मण्डलं यस्य स तस्य। देवस्थानं सुगन्धद्रव्यमिश्रितमेव स्यादिति। पुनः कथंभूतस्य राज्ञः ? दैत्यारीणां देवानां मार्ग आकाशस्तस्मिन् गमनं यस्य स तस्येति । पुनः कथंभूतस्य राज्ञः ? तमायां रात्रौ उदितः उदयं प्राप्तः । अथवा तमोभिरन्धकारैरदितोऽखंडितः । अथवा तमसा राहुणाऽदितोऽखंडितः, राहुणा मुक्तस्येति, शेषं तथैव विशेषणं । पुनः राज्ञ इन्द्रस्येव, इन्द्रपक्षेऽपि महामृग ऐरावण इत्यादि यथोचितयोजना कर्तव्येति ॥ १२ ॥

त्वत्सद्वियोगवनमेव गता तथापि, तीव्रातपोद्धतपराभवभाविताहम् ।
शैवेय ! देव जलजाङ्कित जातमेतद्, यद्वासरे भवति पाण्डुपलाशकल्पम् ॥ १३ ॥

टीका—शिवाया अपत्यं शैवेयः तस्य संबोधने हे शैवेय हे देव हे जलजाङ्कित हे शङ्खलाञ्छन अहमीदृशी वर्ते । तदाह—कथंभूताऽहं ! त्वमेव सन् शोभनो विः पक्षी तस्य योगो यस्मिंस्तत् एवंविधं वनं गृहं जलं काननं वा गता प्राप्ता, ( यद्वा ) तस्य योग एव वनं गृहं जलं काननं वा गता चेतसा भावितत्वन्मयसकलस्थानेत्यर्थः कर्तरि क्तः । "वनं प्रश्रवणे गेहे प्रवासेऽम्भसि कानने" इति हैमानेकार्थ्यां । तथापि कथंभूताऽहं ? तीव्रेति तीव्रः कटुः आतपो विरहल-

क्षणसंतापस्तस्योद्धत उत्कटो यः पराभवोऽभिभवस्तेन भाविता मिश्रिता पीडितेत्यर्थः । तथापीति विरोधालङ्कारो दर्शितः त्वदु(द्यु)क्तगृहादिके आतपपीडा न भवतीति । परमत्र विहंगोपमानमुचितं, चञ्चलस्वभावत्वात् स्थितः सन् तत्कालमेवोड्डयनं कुर्यात् , त्वमप्यागतः सन् त्वरितं गत इत्यर्थः । अथ विरोधपरिहारमाह—त्वत्सेति तव सत् निरन्तरं यो वियोगस्तस्य वनं गृहं तव वियोगमन्दिरं प्राप्तेति । अथवा तव निरन्तरवियोगात्, पञ्चमीतत्पुरुषसमासात् , वनं जलं गृहं काननं इत्यादि स्थानं गतापि क्वापि रतिं न लब्धेत्यर्थः । हे देव यदेतद्वनं पाण्डुपलाशकल्पं जातं। कस्मिन् सति? भातीति भवान् तस्मिन् भवति त्वयि वासरे दिवसे सति। पलं मांसमश्नातीति पलाशो राक्षसः, पांडुः बुभुक्षितत्वाच्छ्वेतश्चासौ राक्षसश्च तेन कल्पं सदृशं भक्षणकारित्वादिति ॥ १३ ॥

व्याहारमेड इव मे यदि नो शृणोषि, शब्दादिकं सुखमिदं व्रजहारि हित्वा ।
नेतर्नरा भुवि भवन्ति गताङ्कुशा ये, कस्तान्निवारयति सञ्चरतो यथेष्टम् ॥ १४ ॥

टीका——हे नेतः ! हे स्वामिन् यदि चेत्त्वं मे मम व्याहारं वचनं एड इव बधिर इव नो श्रृणोषि मम वचनं नाङ्गीकरोषीत्यर्थः । तदा त्वं व्रज याहि । किं कृत्वा ? इदं प्रत्यक्षं शब्दादिकं शब्दरूपरसगन्धस्पर्शलक्षणं सुखं हित्वा त्यक्त्वा । किंविशिष्टं सुखं ? हारि रम्यं । हे नेतः ये नरा भुवि पृथिव्यां गताङ्कुशा निर्मर्यादा भवन्ति, को नरस्तान्नरान् यथेष्टं स्वेच्छं यथा स्यात्तथा सञ्चरतो गच्छतो निवारयति ? अपि तु न कोऽपि तान्निषेधयतीति ॥ १४ ॥

ध्यानं विधेहि कुरु रैवतके तपांसि, विद्धीति मां हरिसुतोऽस्थिरमाशु कर्ता ।
यज्जन्ममात्रलघुगात्रजिनांह्रितो नो, किं मन्दराद्रिशिखरं चलितं कदाचित् ॥ १५ ॥

टीका—हे नेमे! त्वं रैवतके गिरौ ध्यानं विधेहि कुरु। पुनः त्वं तपांसि कुरु। हे नेमे हरिसुतः कृष्णपुत्रः कामः आशु शीघ्रं मां नेमिं अस्थिरं व्रताद्भ्रष्टं कर्ता करिष्यति इति त्वं विद्धि जानीहि । यद्यस्मात्कारणात् कदाचित् कस्मिंश्चित्काले मन्दराद्रिशिखरं किं नो चलितं? अपि तु कंपितमेव । कस्मात्? जन्मेति जन्ममात्रश्चासौ लघुगात्रश्चासौ जिनो वीरश्च तस्यांह्रितः पादकमलात् । अत्र महावीरचरणत इति दृष्टान्तमात्रविवक्षितत्वात् भाविनि दृष्टान्ते भूतोपचारः । अथवा "पुव्वतित्थयरनिद्दिट्ठे" इतिवचनात्प्रसिद्धत्वाद्भवत्येव । एवं "धम्मसारहीणं" इतिपदे भाविनि मेघकुमारदृष्टान्ते भूतारोपणा दृश्यते ॥ १५ ॥

तत्रोषितं निधुवनाय समागतास्त्वां, देव्यः समं सहचरैः सुतनुं समीक्ष्य ।
वक्ष्यन्ति मोहिततरा इति कामरूपो, दीपोऽपरस्त्वमसि नाथ! जगत्प्रकाशः ॥ १६ ॥

टीका—हे नेमे ! देव्यो देवनार्य इति वक्ष्यन्ति कथयिष्यन्ति । किं कृत्वा? त्वां समीक्ष्य विलोक्य । कथंभूतं त्वां? तत्र रैवतके उषितं स्थितं । पुनः कथंभूतं त्वां? सुतनुं शोभनदेहं । कथंभूता देव्यः? सहचरैर्निजमित्रैः समं सार्धं समागता आयाताः । कस्मै? निधुवनाय संभोगाय । पुनः कथंभूता देव्यः? मोहिततरा अतिशयमोहं प्राप्ताः । इति-

वक्ष्यन्ति, इतीति किम्? हे नाथ ! त्वमपरोऽपूर्वो दीपोऽसि । कथंभूतस्त्वं? जगत्प्रकाशः जगति विष्टपे प्रकाशो यस्येति। तैलमयदीपस्तु गृहमात्रमेव प्रकाशयति, अतोऽपर इति। कथंभूतस्त्वं? कामरूपः कन्दर्पसमानः। अथवा तपः-सिद्धत्वादिच्छास्वरूपः ॥ १६ ॥

त्वद्ध्यानभाज्यपि पुनर्मयि नो गताया-मिष्टार्थबाधकबृहद्विरहान्धकारम्।
सद्धर्मधाम्नि सहजोद्यमधौतदोषः, सूर्यातिशायिमहिमाऽसि मुनीन्द्रलोके ॥ १७॥

टीका—हे नेमे ! त्वं मुनीन्द्रलोके योगीश्वरजने । सूर्यातिशायी अधिको महिमा यस्य स एवंविधोऽसि। कथंभूतस्त्वं? सहजेति सहजोद्यमेन आत्मनिष्ठितारंभेण धौता प्रक्षालिता दोषा कर्ममलरूपा रात्रिर्येन स इति । कथंभूते मुनीन्द्र-लोके? सद्धर्मधाम्नि शुभधर्ममन्दिरे। पुनर्हे नेमे त्वं मयि विषये सूर्यातिशायिमहिमा नासि । कथंभूतायां मयि? त्वद्ध्यानभाज्यपि तव ध्यानयुक्तायामपि। पुनः कथंभूतायां मयि? गतायां प्राप्तायां। किं प्रति? इष्टेति इष्टार्थो वा-ञ्छितार्थस्तस्य बाधकं निरोधकं बृहत् प्रौढं विरह एवान्धकारमिति स्पष्टं। एतेन त्वं मुनीन्द्रलोके प्रद्योतकारकोऽसि, मयि तु न, विरहान्धकारविद्यमान(विद्यमानविरहान्धकार)त्वात् इति तव न युक्तमिति ॥ १७ ॥

वक्त्रं जिनात्र वसतः प्रणिधानभाजो, विश्वासतो मृगशिशुव्रजचुम्बितं सत्।
संदृश्यते बहुललक्षणभावितं ते, विद्योतयज्जगदपूर्वशशाङ्कबिम्बम् ॥ १८ ॥

टीका—हे जिन! हे नेमे! ते तव वक्त्रं मुखं अपूर्वशशाङ्कबिम्बं संदृश्यते लोकैरिति शेषः। कथंभूतस्य ते? अत्र नगे वसतो वासं कुर्वतः। पुनः कथंभूतस्य ते? प्रणिधानभाजः समाधियोगयुक्तस्य। कथंभूतं वक्त्रं? मृगेति मृगाणां हरिणानां शिशवो बालास्तेषां व्रजः समूहस्तेन चुम्बितं सत् वर्तमानं। कस्मात्? विश्वासतो निश्चलत्वान्निर्भयत्वेन विश्वासहेतुत्वात्। अत एव कथंभूतं वक्त्रं अपूर्वशशाङ्कबिम्बं? बहुलेति बहुलानि लक्षणानि लाञ्छनानि तैर्भावितं सहितं। चन्द्रमण्डलमध्ये तु एकं लक्ष्म वर्तते, अत्र तु बहूनि चिह्नानि सन्ति, तेन वक्त्रमपूर्वशशाङ्कबिम्बमित्युक्तं। किं कुर्वत् वक्त्रं? विद्योतयत् प्रकाशयत्। किं? जगद्विश्वमिति॥ १८॥

उद्योग एष भवता क्रियतां किमर्थं, किं वाऽथ ते नु वरवस्तुन ऊनमस्ति।
त्वामेव वीक्ष्य शितिभं समुदो मयूर्यः, कार्यं कियज्जलधरैर्जलभारनम्रैः॥ १९॥

टीका—अथेति अन्वादेशे प्रश्ने वा हे नेमे! भवता त्वया एष उद्योग उद्यमः किमर्थं क्रियतां? न कोऽपि हेतुर्दृश्यत इत्यर्थः। नुरवधारणे। वरवस्तुनः प्रधानराज्यादिवस्तुनः सकाशात् इतरत् किं ते तव ऊनं असंपूर्णमस्ति? किमप्यूनं नास्तीत्यर्थः। दृष्टान्तमाह—मयूर्यो मयूरवल्लभाः शितिभं श्यामवर्णं एवंविधं त्वामेव वीक्ष्य विलोक्य समुदः सहर्षा भवन्ति। तदा जलभारनम्रैर्नीरभारेण नमनशीलैः जलधरैर्मेघैः कियत्कार्यं न किमपि कृत्यमस्तीत्यर्थः॥ १९॥

इच्छावरं वरमिति स्वजनेन नुन्ना, वच्मीत्यहं द्रुतकराब्जनिरुद्धकर्णा।
रत्ने यथा जनतया क्रियतेऽभिलाषो, नैवं तु काचशकले किरणाकुलेऽपि॥ २०॥

टीका—हे नेमे ! अहं इति वच्मि कथयामि । कथंभूताऽहं ? इति स्वजनेन बन्धुवर्गेण नुन्ना प्रेरिता कथिता । इतीति किं ? हे राजीमति ! त्वं अवरं अन्यं वरं भर्तारं इच्छ वाञ्छ इति । कथंभूताऽहं ? द्रुतं शीघ्रं कराब्जाभ्यां हस्तकमलाभ्यां निरुद्धौ पिहितौ कर्णौ श्रवणौ यया सेति । इति वच्मि, इतीति किं ? हे स्वजन ! यथा जनानां लोकानां समूहो जनता तया रत्ने मणौ अभिलाषः वाञ्छा क्रियते । एवं तु किरणाकुले मरीचिव्याप्तेऽपि काचशकले काचखण्डे न क्रियत इति ॥ २० ॥

भव्ये मनोहरवरो भविता भवत्याः, किं नेमिनाऽसहशुचा च किमित्थमाल्या ।
वाच्यं किमत्र यदि मे न भवानिवान्यः, कश्चिन्मनो हरति नाथ ! भवान्तरेऽपि ॥२१॥

टीका—हे नेमे ! तदा आल्या सख्या इत्थं किं वाच्यं कथं वक्तव्यं, अमुना वाक्येन सृतमित्यर्थः । इत्थं किं ? तदाह—भव्या मनोहरा तस्याः संबोधनं क्रियते हे भव्ये हे राजीमति, भवत्यास्तव राजीमत्याः मनोहरवरो भविता भविष्यतीत्यर्थः । अतो नेमिना किं ? सृतमित्यर्थः । च पुनः असहशुचा किं ? उत्कटशोकेन सृतमित्यर्थः । इति हे नाथ ! यदि चेदन्यः कश्चिज्जनोऽत्रास्मिन् भवे भवान्तरेऽन्यभवेऽपि मे मम मनश्चित्तं न हरति । क इव भवानिव यथा भवान् त्वं मम मनो हरति तथाऽन्यो नेत्यर्थः ॥ २१ ॥

अस्या न दूषणमतो हि भवानसह्यो—ऽबाधः कृतान्तजनको भवतीश सोऽपि ।
साताय सर्वजगतां च शिवा यमर्कं, प्राच्येव दिग्जनयति स्फुरदंशुजालम् ॥ २२ ॥

टीका–शिवा समुद्रविजयनृपपत्नी प्राची एव पूर्वा एव दिक् काष्ठा यं नेमिनं अर्कं सूर्यं जनयति । कस्मै ? सर्वजगतां सर्वजनानां साताय सुखाय । कथंभूतं यमर्कं ? स्फुरदंशुजालं दीप्यमानकिरणसमूहं । अत्र शिवैव प्राची यमेव सूर्यं इति रूपकालङ्कारः प्रोक्तः, अथ चशब्दोऽत्र भिन्नक्रमत्वात् शिवा निरुपद्रवा प्राची एव दिक् यमर्कं जनयतीति द्वितीयः सूर्यपक्षार्थः । शेषं तथैव । यत्तदोर्नित्यसंबन्धः । हे ईश ! हि यस्मात्कारणात् सोऽपि भवान् नेमिः एवंविधो भवति । तदाह–कथंभूतः स भवान् ? कृतान्तजनकः कृतान्तं वियोगलक्षणं यमं जनयत्युत्पादयतीति कृतान्तजनकः मम पीडाकारणं भवति । यमो हि सर्वेषां पीडाकृदस्तीति । पुनः कथंभूतः स भवान् ? अबाधः उच्छृङ्खलः निरङ्कुश इत्यर्थः । "अबाधोच्छृङ्खलोद्दामा" इति हैमः । पुनः कथंभूतः स भवान् ? असह्योऽसहनीयः कठोरप्रकृतित्वात् । अतः साताय सर्वजगतामिति पूर्वान्वयापेक्षया प्रसूतः पश्चाहुष्टो जात इति विरोधः । अपिर्विरोधार्थः । परिहारस्तु–कथंभूतः स भवान् ? कृतान्तं सिद्धान्तं, अथवा क्षेमकार्यं जनयतीति कृतान्तजनकः । "कृतान्तो क्षेमकर्मणि । सिद्धान्तयमदैवेषु" इति हैमानेकार्थः । पुनः कथंभूत स भवान् ? न विद्यते बाधा पीडा यस्य सोऽबाधः इति । पुनः कथंभूतः स भवान् ? असह्यः उपसर्गैरक्षोभ्यः इति । अथ द्वितीयपक्षे सोऽपि सूर्यः कृतान्तजन्मकारकः । पुनः कथंभूतः स सूर्यः? अबाधः अन्यसर्वतेजोभिरनभिभवः पुनः कथंभूतः सोऽपि सूर्यः ? असह्यो दुर्निरीक्ष्यः । अतः पूर्वार्थापेक्षया कृतान्तजनकादिशब्दलाभात् अस्याः शिवाया जनन्याः पूर्वायाः दिशश्च दूषणं न विद्यते, तस्याः किं दूषणं ? त्वं ( एव ) ईदृशो जात इति काकुः ॥ २२ ॥

चेतश्चमच्चरिकरीषि दरीश्रितानां, तीव्रैर्व्रतैर्विषमरैवतशृङ्गसङ्गी ।
आदर्शधाम्नि धृतकेवलचक्रिवत्किं, नान्यः शिवः शिवपदस्य मुनीन्द्र ! पन्थाः ॥ २३ ॥

टीका—हे मुनीन्द्र ! त्वं चेतः चमच्चरिकरीषि अतिशयेनाश्चर्ययुक्तं करोषीत्यर्थः । केषां ? दरीश्रितानां कन्दरास्थितानां जनानां । कैः ? तीव्रैः उत्कटैः व्रतैर्यमनियमरूपैः। कथंभूतस्त्वं ? विषमरैवतशृङ्गसङ्गी असमरैवतगिरिशिखरस्थित इत्यर्थः । हे मुनीन्द्र ! शिवपदस्य पन्था मार्गोऽन्य एतत्कष्टात् इतरः किं न वर्तते ? अपि तु वर्तते एव । कथंभूतः पन्थाः ? शिवो निरुपद्रवः । किंवत् ? आदर्शधाम्नि दर्पणगृहे धृतकेवलचक्रिवत् लब्धकेवलज्ञानभरतचक्रधर इवेति ॥२३॥

पूर्णं व्रतेन भवतु क्रियया गतैः किं, कष्टैः कृतं च तपसाऽस्त्वलमन्यकृत्यैः ।
चेत्केवलं शिवसुखाब्जविकाशहेतुं, ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४ ॥

टीका—हे नेमे! व्रतेन पूर्णं सृतं । क्रियया भवतु सृतं । गतैर्गमनैर्विहारैः किं ? सृतं । कष्टैः लोचादिभिः कृतं सृतं । तपसाऽस्तु सृतं । अन्यकृत्यैरन्यधर्माभासकार्यैः अलं सृतं । हे नेमे ! चेद्यदि सन्तः पण्डिताः केवलमसहायमेकं अमलं निर्मलं शिवसुखाब्जविकाशहेतुं मोक्षसुखकमलोल्लासनकारणं एवंविधं ज्ञानस्वरूपं ज्ञानलक्षणं प्रवदन्ति इति ॥२४॥

बालश्चिखेलिथ सुरैः कृतनर्मकर्म—र्धीरो भवंश्च समितौ भुवनेषु जिष्णुः ।
सत्त्वात्पुनः स च गृहीति किमत्र गण्यो, व्यक्तं त्वमेव भगवन्! पुरुषोत्तमोऽसि ॥ २५ ॥

टीका—हे भगवन् ! व्यक्तं प्रकटं अत्र लोके त्वं एव पुरुषोत्तमो गण्यः संख्येयः इति किमसि? अपि तु पुरुषोत्तमो गण्यो नासि । त्वं बालः सन् सुरैर्देवैः सह चिखेलिथ क्रीडां करोषि स्मेत्यर्थः । कथंभूतैः सुरैः ? कृतानि नर्मकर्माणि क्रीडाकर्माणि येषां तैः । कर्मशब्दोऽत्राकारान्तोऽप्यस्ति । च पुनः कथंभूतस्त्वं ? धीरो दृढः भवन् । कस्यां ? समितौ ईर्यादिपञ्चसमितिरूपेऽथवा सात्म्ययोगे । यतः—“समितिर्युधि सङ्गमे । सात्म्ये सभायामीर्यादौ” इति हैमानेकार्थः । पुनः कथंभूतः त्वं? भुवनेषु विश्वेषु जिष्णुः जयनशीलः । कस्मात् ? सत्त्वात् पराक्रमात् । अथ कृष्णोऽपि सुरैः सह क्रीडां चकार, समितौ संग्रामे सभायां वा धीरो भवन् पुनः सत्त्वात् विश्वे जयनशीलः । इति तव कृष्णस्य च साम्यं प्रोक्तं अथ कृष्णस्य विशेषमाह—पुनरितिभेदे। स च कृष्णः गृही कलत्रवान् इति वर्तते, त्वं तु न इति तेन पुरुषोत्तमः गण्यो नेति युक्तं । पुरुषाणां मध्ये उत्तमः पुरुषोत्तम इति निरुक्तिः । अथवा “स च गृहीति भवांस्तु योगी” इति पाठान्तरं। तत्र पक्षे हे भगवन् ! त्वमेव पुरुषोत्तमोऽसि, साम्यधर्मत्वात्। पुनः स च कृष्णो गृही। पुनः भवान् तु योगी योगधारी। यतोऽलङ्कारग्रन्थे—“केनचिद्यत्र धर्मेण, द्वयोः संसिद्धसाम्ययोः। भवत्येकतराधिक्यं, व्यतिरेकः स उच्यते॥ १॥ अस्त्वस्तु पौरुषगुणाज्जयसिंहदेवपृथ्वीपतेर्मृगपतेश्च समानभावः। किं त्वेकतः प्रतिभटाः समरं विहाय, सद्यो विशन्ति वनमन्यमशङ्कमानाः ॥२॥ इति व्यतिरेकालङ्कार उक्तः। लोकभाषया स्त्रीरहितो योगी कथ्यते इत्यस्या ईर्ष्यावचनमपि ॥ २५ ॥

पूर्वं प्रभो ! प्रबलपूरितपाञ्चजन्यः, के प्रेंखिताच्युतभुजो हसितोऽस्य दारैः ।
मौनं श्रितः परिणये विमुखोऽधुनैवं, तुभ्यं नमो जनभवोदधिशोषणाय ! ॥ २६ ॥

टीका—हे प्रभो ! पूर्वं प्रथमं भवान् प्रबलपूरितपाञ्चजन्यः प्रबलेन शौर्येण पूरितो ध्मातः पाञ्चजन्यो वासुदेवशङ्खो येन स इति अभवत् । ततोऽनन्तरं भवान् के प्रकाशेऽर्थात्प्रकाशयुक्ते मल्लाक्षाटके प्रेंखिताच्युतभुजो चालितकृष्णहस्तोऽभवत् । ततोऽनन्तरं कशब्दोऽत्रानुवर्तनीयः तेन के जले जलाश्रये इत्यर्थः । अस्य कृष्णस्य दारैः सत्यभामादिस्त्रीभिर्भवान् हसितः हास्यं नीतः । ततोऽनन्तरं भवान् परिणये विवाहमेलननिमित्तं मौनं श्रितः गृहीतमौनोऽभवत् । ततोऽनन्तरमधुना सांप्रतं एवंप्रकारः, कोऽर्थः ? तोरणे आगतः पाणिग्रहणमकृत्वा पश्चाद्वलितः, संवत्सरदानं दत्वा व्रतं गृहीत्वा रैवतके योगासक्त इत्यर्थः । एवंशब्दः प्रकारार्थः । हे जनभवोदधिशोषणाय ! जनानां संसार समुद्रशोषणे आयो लाभो यस्य सः । अथवा जनो मल्लक्षणस्तस्य भवः जन्म स एवोदधिः समुद्रस्तस्य शोषणे स्थलकरणे आयो लाभो यस्य स तस्य संबोधने इति । वियोगिनामेकापि घटिका कल्पान्तकालोपमा भवति, अतो भवोदधीत्युक्तं युक्तं । हे नेमे ! तुभ्यं नमः नमस्कारोऽस्तु । एतेन त्वं शिक्षायोग्यो न, अहं तु शिक्षाकथनेन थकिता इति अत्यन्ततिरस्कृत्यलङ्कारोऽयं । यदुक्तं नैषधे—"मुखरय स्वयशोनवडिण्डिमं, जलनिधेः कुलमुज्ज्वलयाधुना। अपि गृहाण वधूवधपौरुषं, हरिणलाञ्छन मुञ्च कदर्थनाम् ॥ १ ॥" इति ॥ २६ ॥

त्वं चेच्छिवात्मज इतीश शिवाय मे किं, नारिष्टनेमिरिति चेदशुभच्छिदेऽपि । ॥
स्वैर्वा निरुक्तवशतो मयि सानुकूलः, स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७ ॥

टीका—हे नेमे ! चेद्यदि त्वं शिवात्मज इत्यसि, तदा त्वं मे मम शिवाय कल्याणाय किं नासि ? शिवहेतुत्वात् शिवा

जननी तत्पुत्रस्त्वं तादृशो नेति । हे नेमे ! चेद्यदि त्वं अरिनेमिरिति असि, तदापि पुनः त्वं मे ममाशुभच्छिदे कष्टविदारणाय किं नासि ? अरिष्टस्याशुभस्य नेमिरिव प्रध्वंसकत्वादरिष्टनेमिरिति निरुक्ततः । वेति पक्षान्तरे । हे नेमे ! स्वैः स्वकीयैर्जनैः कदाचिदपि कस्मिंश्चिदपि काले स्वप्नान्तरेऽपि निद्रावस्थायामपि त्वं मयि विषये सानुकूलोऽनुरागयुक्तो नेक्षितोऽसि न विलोकितोऽसि । कस्मात् ? निरुक्तवशतः निरुक्त्यधीनतः । शिवात्मज इति अरिष्टनेमिरिति भवान् नामतोऽस्ति, परमर्थतो नास्ति इत्युक्तम् ॥ २७ ॥

वेत्थेति नाद्रिवसते विशदं ध्रुवं त्वां, सौवं मतं प्रतिविभातमिदं ब्रवीति ।
रागीभवद्विकचकोकनदश्रियारं, बिम्बं रवेरिव पयो धरपार्श्ववर्ति ॥ २८ ॥

टीका—अद्रौ वसतिर्यस्य स तस्य संबोधने हे अद्रिवसते ! त्वमिति न वेत्थ न वेत्सि। इतीति किं? तदाह—हे नेमे ! ध्रुवं निश्चितं प्रतिविभातं विभातं विभातमित्यव्ययीभावः । प्रभाते प्रभाते । धरपार्श्ववर्ति रैवतकपर्वतसमीपवर्तमानं पयो जलं कर्तृपदं । इदं मतं मनोभिप्रायं त्वां ब्रवीति । ब्रूञ् धातुर्द्विकर्मकः । कथंभूतं मतं ? स्वस्येदं सौवं स्वकीयं । पुनः कथंभूतं ? विशदं निर्मलं । पुनः कथंभूतं मतं? अरमत्यर्थं विवकककोकनदश्रिया विकस्वररक्तकमलच्छायया रागीभवत् सञ्जायमानरक्तवर्णं । किमिव ? रवेर्बिंबमिव सूर्यस्य बिम्बमपि मतं त्वां ब्रवीति । शेषं तथैव योजनीयमिति । एतेन जलं त्वां प्रति कथयति—यथाऽहं जलं रक्तकमलश्रिया सह रागीभवामि तथा त्वमपि राजीमत्या सह रागीभव इति त्वं न वेत्थ इति स्थितं । "धरः कूर्माधिपे गिरौ कर्पासमूले" इति हैमानेकार्थः ॥ २८ ॥

स्वामिन् ! समुद्रविजयावनिपालसूनो, स्तादीश्वरोऽत्र यदहार्यगतिं तवेमाम् ।
कान्तिं निवारयति विष्णुपदोदिता क-स्तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥ २९ ॥

टीका— हे स्वामिन्! हे समुद्रविजयावनिपालसूनो! हे समुद्रविजयभूपपुत्र! अत्र रैवतकनगे भवानीश्वरः स्वामी शब्दच्छलान्महादेवः स्तात् भवतु । यद्यस्मात्कारणात् को नरः तवेमां कान्तिमिच्छां शोभां वा निवारयति ? अपि तु न कोऽपीत्यर्थः । “ कान्तिः शोभाकामनयोः ” इति हैमानेकार्थः । कथंभूतां कान्तिं ? अहार्या हर्तुमशक्या गतिर्गमनं यस्याः सा । अथवाऽहार्ये पर्वते रैवतके गतिर्गमनं यस्याः सा । अथवाऽहार्यवत्पर्वतवद्गतिर्हठस्वरूपा यस्यां सा तामिति । पुनः कथंभूतां कान्तिं ? विष्णोः कृष्णस्य पदं अर्थात् क्रीडास्थानं रैवतकस्तस्मिन्नुदिता उदयं प्राप्ता । अथवा विष्णुपदवत् आकाशवत् उदिता उद्गता शून्या निरर्थका इत्यर्थः । अथवा विष्णुपदे आकाशे उदिता भूमिगतं मनोहरवस्तुसार्थं विहाय शून्यस्थाने जातेत्यर्थः । तामिति । महादेवस्यापि कान्तिं को निवारयति ? अहार्ये हिमाचले गतिर्यस्याः सा तां । विष्णुपदोदितां आकाशोद्गतां । अथवा विष्णुपदादुदितां प्रकटितां एवंविधां कान्तिं शोभां गंगामित्यर्थः गंगा तु हरिचरणोद्गता हरशिरःस्थितेति लोकोक्तिः इत्युक्तिलेशः। यथा तुङ्गोदयाद्रिशिरसि उच्चोदयाचलशिखरे सहस्ररश्मेः सूर्यस्य कान्तिं को निवारयति ? । विष्णुपदे आकाशे उदितां । शेषं यथोचितं योज्यमिति ॥ २९ ॥

सारेच्छुदुर्लभमतोऽफलमेव मन्ये, मुख्यं महेश महतोऽप्यपरोपकृत्ते ।
सिद्धागमार्थवरमुच्चदशं स्वरूप-मुच्चैस्तटं सुरगिरेरिव शातकौंभम् ॥ ३० ॥

टीका— हे महेश ! हे महाप्रभो ! अहं ते तव स्वरूपं ध्यानावस्थागतरूपं अतः कारणादफलं निरर्थकमेव मन्ये जानामि । कथंभूतं स्वरूपं ? मुख्यं प्रधानमिति । पुनः कथंभूतं स्वरूपं ? सिद्धा देवास्तेषामागम आगमनं तस्यार्थो हेतुस्तेन वरं श्रेष्ठं । अथवा सिद्धः प्रसिद्ध आगमानां जिनप्रणीतशास्त्राणामर्थो हेतुस्तेन वरमिति, आगमोत्पत्तिकारणत्वात् । "आगमस्त्वागतौ शास्त्रे" इति हैमानेकार्थः । पुनः कथंभूतं स्वरूपं ? उच्चदशं उच्चा ऊर्ध्वा गुणस्थानापेक्षया दशाऽवस्था यस्य तदुच्चदशं । एवंविधमपि विशेषणद्वारेणाफलकारणमाह— पुनः कथंभूतं स्वरूपं ? अपरोपकृत् परेषामनुपकारकं, त्वत्स्वरूपस्यानुभवगम्यत्वात् स्थूलमतीनामकिञ्चित्करं । अथवा विषमस्थानस्थितस्य दर्शनमपि दुर्लभमतो जनानामनुपकारकमिति । पुनः कथंभूतं स्वरूपं ? सारेच्छुदुर्लभं सारं श्रेष्ठमिच्छतीति सारेच्छुस्तेन दुर्लभं दुष्प्रापमिति । कथंभूतस्य ते ? महतो महानुभावस्यापि । किमिव तटमिव । यथाऽहं सुरगिरेर्मेरुपर्वतस्य शातकौंभं सुवर्णमयं तटं अतोऽफलं मन्ये । कथंभूतं तटं ? मुख्यं प्रधानं । पुनः कथंभूतं तटं ? सिद्धेति सिद्धाः प्रसिद्धा आगमा अगाः शब्दप्रभेदत्वाच्चन्दनादिवृक्षा अर्था (श्च) अन्यवस्तूनि तैर्वरं श्रेष्ठं । पुनः कथंभूतं तटं ? उच्चदशमुन्नतदशं । पुनः कथंभूतं तटं ? उच्चैरुन्नतं । एवंविधमपि अफलकारणमाह—पुनः कथंभूतं तटं ? अपरोपकृत् अनुपकारकं । यतः कथंभूतं तटं ? सारेच्छुदुर्लभं धनवाञ्छकनरदुष्प्रापमिति । कथंभूतस्य सुरगिरेः ? महतः प्रौढस्येति ॥ ३० ॥

उभयोर्द्वयोः कुमुदिनीचकोरयोरिव आश्रितानां सेवकानां अभयं भयरहितं अयनं मार्गं गृहं वा दृष्ट्वेति। निजस्वामी सेवकानां मार्गं गृहं वा गच्छति सङ्गमार्थं प्रीत्येत्यर्थः। इति राजीमत्या विप्रलम्भाधिकारः ॥ ३४ ॥

माकन्दवृन्दवनराजिपदे निरेनो–ऽसह्योऽप्यहो सकलकेवलसंपदाप्तेः ।
सालत्रयं भविभृतं भुवि मोहभूपो, नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३५ ॥

टीका—निर्गतमेनः पापं यस्मात्स निरेनास्तस्य संबोधने हे निरेनः! हे निष्पाप! अहो इत्याश्चर्ये असह्योऽपि असहनीयोऽपि मोहभूपः सकलकर्मनायको मोहराजः सालत्रयं वप्रत्रिकं नाक्रामति न पीडयति। कथंभूतं सालत्रयं? ते तव क्रमयुगाचलसंश्रितं चरणयुगलपर्वताश्रितं। पुनः कथंभूतं सालत्रयं? भविभृतं देवैर्नरैस्तिर्यग्भिः पूर्णं। कथंभूतस्य ते? सकलेति सकलं संपूर्णं यत्केवलं केवलज्ञानं तस्य संपद आप्तिः प्राप्तिर्यस्य स तस्य सकलकेवलसंपदाप्तेः। कस्मिन्? माकन्देति माकन्दा आम्रास्तेषां वृन्दानि यस्मिंस्तत् एवंविधं यद्वनं तस्य राजिः श्रेणिस्तस्याः पदे स्थाने रैवतके। आधारे सप्तमी। श्रीनेमेः केवलज्ञानं रैवतके समुत्पन्नमिति ॥ ३५ ॥

अथ नेमिस्तुतिद्वारं प्रकटयन्नाह—

इत्युत्सुका गतिविनिर्जितराजहंसी, राजीमती दृढमतिः सुसती यतीशम् ।
इन्द्रैः स्तुतं ह्युपययाविति नोऽसुखाग्निं, त्वन्नामकीर्तनजलं शमयत्यशेषम् ॥ ३६ ॥

टीका—हीति निश्चितं राजीमती यतीशं साधुस्वामिनं नेमिनं इति उपययौ समीपं जगाम। कथंभूता राजीमती इत्युत्सुका सादरा। इतीति किं? तत्प्रभुसमीपं मोहभूपपीडारहितमिति हेतोः। पुनः कथंभूता राजीमती? गतिविनिर्जितराजहंसी स्पष्टं। पुनः कथंभूता राजीमती? दृढमतिर्निश्चलवुद्धिः। पुनः कथंभूता राजीमती? सुसती शुभसाध्वी। कथंभूतं यतीशं? इन्द्रैः स्तुतं कीर्तितं। इतीति किं? हे नेमे! त्वन्नामकीर्तनजलं तव नामस्तवनमेव नीरं कर्तृपदं। नोऽस्माकं असुखाग्निं दुःखानलं अशेषं समस्तं शमयति स्फेटयति ॥ ३६ ॥

मत्तालिपाटलमलीमसकामभोगी, योगीश ! दुर्धरकषायफटोत्कटाक्षः ।
जय्यो जवेन जठराप्तजनोऽपि तेन, त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ३७ ॥

टीका—हे योगीश! हे साम्ययोगस्वामिन्! यस्य पुंसो नरस्य हृदि हृदयकमले त्वन्नामनागदमनी तवाभिधानमेव भुजङ्गदमनी ओषधी वर्तते। यत्तदोर्नित्यसंबन्धः। तेन पुरुषेण मत्तालिपाटलमलीमसकामभोगी जय्यः जेतुं शक्यते मत्ताः क्षैब्यं प्राप्ता येऽलयो भ्रमरास्तेषां पाटलं समूहस्तद्वन्मलीमसः कृष्णो यः काम एव भोगी सर्प इत्यर्थः। कथंभूतः? दुर्धरा दुःसहा भयङ्करा ये कषायाः क्रोधादयस्त एव फटाः फणास्तैरुत्कटे तीव्रे अक्षिणी नेत्रे यस्य सः। अथवा दुर्धरकषायाः फटाः दंभा एव उत्कटे मत्ते अक्षिणी यस्य स इति। "फटास्तु कैतवे फणे" इति "उत्कटस्तीव्रमत्तयोः" इति च हैमानेकार्थः। पुनः कथंभूतः? जवेन वेगेन जठरमुदरमाप्तः प्राप्त एवंविधो जनो यस्य सः। अपिः विस्मये। कामसर्पेण सर्वे जना भक्षिताः सन्ति ॥ ३७ ॥

( सर्वे ) भवन्त्येव । कथंभूता मर्त्याः ? अगदा रोगरहिताः । किं कृत्वा ? सिद्धवरवस्तु आश्रित्य प्राप्य आसेव्येति सिद्ध औषधसिद्धः सिद्धवैद्यः तस्य वरं श्रेष्ठं वस्तु रसायनादिभेषजं इति ॥ ४१ ॥

काँस्कान्नवानि हसिताब्जशुचीन् गुणांस्ते, येऽनादितो विषमबाणभटेन नद्धाः ।
राज्ञि त्वयीश ! मनुजाः सति सार्वभौमे, सद्यः स्वयं विगतबन्धभया भवन्ति ॥ ४२ ॥

टीका—हे ईश ! अहं ते तव काँस्कान् कान् कान् गुण(णान्) औदार्यादीन् नवानि स्तवीमि ! तव गुणानामानन्त्यात् वक्तुं समर्थो न भवामीत्यर्थः । कथंभूतान् गुणान् ? हसिताब्जशुचीन् विकस्वरकमलपवित्रान् । हे ईश ! ये प्राणिनः अनादितोऽनादिकालात् विषमबाणभटेन कामसुभटैर्न नद्धा बद्धाः सन्ति । तच्छब्दोऽत्र गम्यः । ते मनुजाः शीघ्रं स्वयं आत्मना विगतबन्धभया भवन्ति । कस्मिन् सति ? त्वयि नेमौ सार्वभौमे चक्रवर्तिनि राज्ञि भूपे सतीति स्पष्टं । "द्विः कानः कानि सः" ( श्रीसि० १-३-११ ) इति सूत्रेण सकारागमः पूर्वस्यानुस्वारानुनासिकौ च इति हेमबृहद्वृत्तौ, तेन काँस्कानिति सिद्धमिति ॥ ४२ ॥

सद्ब्रह्मचार ! जिन यादववंशरत्न, राजीमतीनयनकोकविरोकितुल्य ।
जुष्टः श्रिया सकलयैकपदे भवेत्स, यस्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥

टीका—हे सद्ब्रह्मचार ! बालब्रह्मचारित्वात् हे जिन ! हे यादववंशरत्न ! स्पष्टं । हे राजीमतीनयनकोकविरोकितुल्य राजीमतीनेत्रचक्रवाकसूर्यसमान विरोकाः किरणा अस्य सन्तीति विरोकी सूर्यः । हे नेमे ! यो मतिमान् पण्डितः इमं

तावकं त्वत्संबन्धिनं स्तवं स्तवनं अधीते पठति, स मतिमान्, एकपदे इति विभक्तिप्रतिरूपकमव्ययं शीघ्रार्थे, शीघ्रं श्रिया लक्ष्म्या जुष्टः सहितो भवेत् । कथंभूतया श्रिया ? सकलया समस्तया ॥ ४३ ॥

हारावलीं नुतिमिमां द्युतिसन्ततीद्धां, कण्ठे दधाति महिमाप्रभसूरिराजः ।
यस्ते सदैव रुचिराश्रितभावरत्नां, तं मानतुङ्गमवशा समुपैति लक्ष्मीः ॥ ४४ ॥

## ॥ इति श्रीभक्तामरस्तोत्रात्तच्चतुर्थपादसमस्यामयं श्रीनेमिसंबोधनस्तोत्रम् ॥

टीका—हे जिन ! यो जनस्ते तवेमां नुतिं स्तुतिं हारावलीं हारश्रेणिरूपां सदैव कण्ठे दधात्यलङ्करोति । कथंभूतो यः ? महिम्ना महत्त्वेन आ समन्तात् प्रभा यस्य स महिमाप्रभः, सूरीणां पण्डितानां राजा सूरिराजः, महिमाप्रभश्चासौ सूरिराजश्च महिमाप्रभसूरिराजः । एतेन स्वगुरोः श्रीमहिमाप्रभसूरिराज इति नाम दर्शितं । कथंभूतां नुतिं हारावलीं- द्युतिसन्ततीद्धां द्युतीनां प्रभाणां सन्ततिभिरावलीभिः इद्धां दीप्तां । पुनः कथंभूतां नुतिं हारावलीं ? रुचिराणि मनोहराणि आश्रितानि प्रोतानि भावा अभिधेयविशेषा एव रत्नानि यस्यां सा तामिति । एतद्विशेषणेन शिष्यावस्थायां भावरत्न इति निजनाम कविना दर्शितं । सूरिपदप्राप्तौ तु भावप्रभ इति नाम लब्धमिति यत्तदोर्नित्यसंबन्धः । लक्ष्मीस्तं पुरुषं समुपैति प्राप्नोति । कथंभूता लक्ष्मीः ? अवशाऽनधीनाऽपि । कथंभूतं तं ? मानतुङ्गं मानोन्नतमपि ॥ ४४ ॥

॥ इति श्रीभावप्रभसूरिविरचिता नेमिसंबोधनस्वोपज्ञवृत्तिः ॥



। श्रीधर्मसिंहसूरिविरचितम् ।

# । श्रीसरस्वतीभक्तामरस्तोत्रम् ।

( सटीकम् )

॥ स्वागताच्छन्दः ॥

स्वस्तिकर्तुरभिवन्द्यपदाब्जं, सद्गुरोर्विशदवाग्मुदसिन्धोः । दुर्मुखाभिमुखसिन्धुरसिंहीं, तां स्तवस्य विवृणोमि सुवृत्तिम् ॥१॥ 'मुदि हर्षे' मोदनं मुदः वाचां मुदो वाग्मुदः वाग्विलासः। विशदश्चासौ वाग्मुदश्च विशदवाग्मुदः तस्य सिन्धुः समुद्रः योऽसौ विशदवाग्मुदसिन्धुस्तस्य विशदवाग्मुदसिन्धोः गुरोर्विशेषणं। मुदशब्दोऽत्राकारान्तो न तु हसान्तः इति ॥

भक्तामरभ्रमरविभ्रमवैभवेन, लीलायते क्रमसरोजयुगो यदीयः ।
निघ्नन्नरिष्टभयभित्तिमभीष्टभूमा-वालम्बनं भवजलेपततां जनानाम् ॥ १ ॥

मत्वैव यं जनयितारमरंस्त हस्ते, या संश्रितां विशदवर्णलिपिप्रसूत्या ।
ब्राह्मीमजिह्मगुणगौरवगौरवर्णां, स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम् ॥२॥ युग्मम् ॥

टीका—किलेति सत्ये । अहमपि तां ब्राह्मीं स्तोष्ये । यत्तदोर्नित्यसंबन्धात्तामितिपदं गृहीतं । ब्रह्मणो ज्ञानस्येयं मूर्तिर्ब्राह्मी श्रुतदेवता । अथवा ब्रह्मचर्येण शीलेन ख्याता ब्राह्मी ऋषभदेवपुत्री ब्राह्मी सुन्दरीत्यभिधानात् । अथवा बृंहते शब्दायते अथवा बृहते वर्धते मा ज्ञानं अनेनेति ब्रह्मः वर्णात्मकः समुदायः, स च द्विपञ्चाशदक्षराणां न्यासो लिपिरूपस्तेन ब्रह्मन्यासेन जाता ब्राह्मी अक्षरात्मिका लिपिरिति व्यक्तार्थचतुष्टयप्रतिपादिकां तां ब्राह्मीं मुख्यत्वाच्छ्रुतदेवतामेव स्तौति शास्त्रकृत्, यत आप्तोक्तिः—"नमो बंभीए लिविए" "अहवा नमो सुयदेवयाए भगवतीए" इत्याख्यानदर्शनान्नैष संशयापन्नः । पूर्वोक्तार्थचतुष्टयसंपन्नामपि तां स्तौति, चरितार्थवैचित्र्येण कवीनां रचनायोगाच्चेति विवेकः । किलेत्यव्ययं । अहमिति कर्ता । ब्राह्मीमिति द्वितीयान्तं कर्म । स्तोष्य इति क्रियापदं । कर्तृक्तिरियं । किंविशिष्टां ब्राह्मीं श्रुतदेवतां ? 'अजिह्मगुणगौरवगौरवर्णां' अजिह्मः सरलः गुणानां गौरवः अनन्तज्ञानदर्शनपर्यायात्मकस्तेनाजिह्मगुणगौरवेण गौरवर्णः शुभ्रप्रकाशो यस्याः साऽजिह्मगुणगौरवगौरवर्णा तां, ज्ञानस्य शुभ्रप्रकाशत्वात् प्रथमोऽर्थः १ । अथवा किंविशिष्टां ब्राह्मीं सरस्वतीं ? अजिह्मः अकुटिलः गुणगौरवः वरदानलक्षणः तेन गौरवर्णः सुन्दररूपं यस्याः सा तां वरप्रदानगुणेन गौररूपत्वाद्द्वितीयोऽर्थः २ । अथवा किंविशिष्टां ब्राह्मीं ऋषभपुत्रीं ? अजिह्मगुणगौरवेण क्षान्त्यादिगुणमहत्त्वेन गौरो निर्मलः वर्णनं वर्णः स्तुतिर्यस्याः सा तां क्षान्त्यादिमहत्त्वेन निर्मलस्तुति-

त्वात् तृतीयोऽर्थः ३ । अथवा किंविशिष्टां ब्राह्मीं अक्षरलिपिं ? अजिह्मानि सरलानि गुणगौरवेण दक्षिणकरलिखनन्यासेन गौराणि उज्ज्वलानि वर्णान्यक्षराणि यस्याः सा तां सरलाक्षरन्यासां चतुर्थोऽर्थः ४ । पुनः किंविशिष्टां ब्राह्मीं ? तं प्रथमं जिनेन्द्रं संश्रितामाश्रितां श्रुतदेवतापक्षे तं प्रथमं प्रथु विस्तारे प्रथनं प्रथो विस्तरो मा ज्ञानं यस्य स (तं) प्रथमं जिनेन्द्रं तीर्थनाथं, जयति रागादीनिति तीर्थकृत्पक्षे जिनानां सामान्यकेवलिनां इन्द्रो जिनेन्द्रस्तं जिनेन्द्रं, जिनाः सामान्यकेवलिनः कथ्यन्तेऽर्हन्नपि च । सरस्वतीपक्षेऽप्येवं, तमेव वाग्रूपत्वेन संश्रितां, अथवा मतान्तरे जिनो विष्णुः स चासाविन्द्रश्च जिनेन्द्रः, त्रयाणां ब्रह्मविष्णुरुद्राणामेकत्वकथनेन सर्वेषां जिनेन्द्रतापत्तिः, तथापि मुख्यत्वाद्ब्रह्मणः प्रथमजिनेन्द्रत्वं प्रतिपादितं । तेन प्रथमं जिनेन्द्रं ब्रह्माणमेवेति फलितोऽर्थः तं संश्रितां । ब्राह्मीसाध्वीपक्षे लिपिपक्षे च तं प्रथमं जिनेन्द्रं श्रीधर्मनाथं ऋषभदेवं संश्रितां तदुत्पन्नत्वाच्चेति निर्णयः, तं प्रथमं जिनेन्द्रं संश्रितां । कया ? वर्णलिपिप्रसूत्या वर्ण्यते इति वर्णः प्रकाशः, लिपिरक्षरन्यासस्तयोः प्रसूतिरुत्पादस्तथाश्रुतप्रकाशाक्षरजननेनेति । श्रुतदेवतापक्षे वर्णः, सरस्वतीपक्षे लिपिः, ब्राह्मीशब्दद्वयार्थपक्षे वर्णानामक्षराणां लिपिर्न्यासः वर्णलिपिः, सा चासौ प्रसूतिश्च तया, प्रसूतिरुत्पादः सन्तानश्च पुत्रीभावत्वेनाश्रितां इति विशेषणपदं स्थितं । तां कां ? या ब्राह्मी पूर्वोक्तार्थचतुष्टयात्मिका । तं कं ? यं पूर्वोक्तं प्रथमं जिनेन्द्रं जनयितारं उत्पादयितारं अर्थात् पितरं मत्वा ज्ञात्वा एव हस्ते करविषयेऽरंस्त सोल्लासं रेमे क्रीडति स्म । एवशब्दोऽत्रावधारणार्थे निश्चये च । लोकेऽपि वर्णलिपयः सन्तानानि च हस्ते रममाणा वृद्धिं यन्तीति भावः । पुनस्तां कां ? यदीयः क्रमसरोजयुगो यस्या ब्राह्म्या अयं यदीयः चरणकम-

लयुगलं । लीलां करोतीति लीलायते लीलां कुर्वन् प्रवर्तत इत्यर्थः । अत्र युगशब्दः पुंनपुंसकलिंगः स्वाभाविकस्तेन पुंसि । यानार्थपूर्वपदात् केवलं युगशब्दः पुंस्येवेति हेमलिंगानुशासने बोध्यं । केन ? भक्तामरेति सेवकवैभवेन भक्ता भक्तिशालिनो येऽमरा देवास्ते एव भ्रमरास्तेषां विभ्रमो विलासस्तस्य वैभवः समृद्धिः भक्तामरभ्रमरविभ्रमवैभवस्तेन भक्तामरभ्रमरविभ्रमवैभवेन सेवकसुरमधुकरविलाससमृद्ध्या सेवितमस्तीत्यर्थः । यदीयः क्रमसरोजयुगः किं कुर्वन् ? जनानां भक्तसेवकानां अरिष्टभयभित्तिं निघ्नन् नाशयन् दूरीकुर्वन् । दुष्टग्रहकृतोपद्रवोऽरिष्टः, स्वचक्रपरचक्रकृतं भयं, तद्रूपा भित्तिः कुड्यं तां अरिष्टभयभित्तिं निघ्नन् रंहसा पातयन्, अभीष्टकार्यावरोधिनी सुदृढापि भित्तिः पादाभ्यां व्याहन्यते इत्यर्थः । किंविशिष्टः क्रमसरोजयुगः ? अभीष्टभूमौ आलम्बनं इष्टकार्यसिद्धौ आलम्बनं आधारभूतं। अजहल्लिंगत्वादालंम्बनं ( इति ) शब्दः । किंविशिष्टामरिष्टभयभित्तिं ? भवजलेपततां भवात्संसाराज्जातो भवजः संसारोत्पन्नः लेपः कर्मकर्दमस्तेन तता व्याप्ता भवजलेपतता तां भवजलेपततां, लेपव्याप्तत्वेन सुदृढामित्यर्थः । अथ च शास्त्रादौ समीहितसिद्धये मङ्गलमभिधातव्यं, तच्चात्र काव्ययुग्मेनैव सिद्धं, यतो देवतानां स्तवननमनानुध्यानाद्यमेव प्रथमं प्रथितं मङ्गलं, ग्रन्थारम्भे चाभिधेयादित्रयं वाच्यं तत्र ब्राह्मीत्यभिधेयं, प्रयोजनं च सज्ज्ञानतापत्तिः, अभिधेयप्रयोजनयोश्च साध्यसाधनभावश्च संवन्ध इति युक्तिलेशः । इति युग्मविवृतं ॥ १—२ ॥

मातर्मतिं सति सहस्रमुखीं प्रसीद, नालं मनीषिणि मयीश्वरि भक्तिवृत्तौ ।
वक्तुं स्तवं सकलशास्त्रनयं भवत्या, मन्यः क इच्छति जनः सहसा ग्रहीतुम् ॥ ३ ॥

नसं तत्र हंसीप्रापणमुचितमेव । किमर्थं ? प्रीतेः स्नेहस्य परिपालनार्थं निर्वाहार्थं । किंविशिष्टायाः प्रीतेः ? जगत्त्रयजनध्वनिसत्यतायाः विश्वत्रयजनस्य ध्वनेः सत्यता यथार्थता यस्यास्तस्याः । हंसीमानसयोर्नितरां प्रीतिरिति लोकोक्तेः सुतरां करणार्थं । किंविशिष्टस्य मम ! निजशिशोः स्वस्तनन्धयस्य निजपुत्रस्येवेत्यर्थः । पुत्रं मत्वैव प्रीतिं निर्वाहयतीति श्रुतिः । किं कृत्वाऽभ्येति ? त्वद्वर्णनावचनमौक्तिकपूर्णं एक्ष्य त्वद्वर्णनायाः त्वदीयस्तुतेः प्रशंसाया वचनमौक्तिकानि वाक्यान्येव मुक्ताफलानि तैः पूर्णं त्वद्वर्णनावचनमौक्तिकपूर्णं मानसं एक्ष्य विलोक्य त्वरितमभ्येतीति तात्पर्यम् ॥ ५ ॥

वीणास्वनं स्वसहजं यदवाप मूर्च्छां, श्रोतुर्न किं त्वयि सुवाक् प्रियजल्पितायाम् ।
जातं न कोकिलरवं प्रतिकूलभावं, तच्चारुचूतकलिकानिकरैकहेतुः ॥ ६ ॥

टीका—हे सुवाक् ! सुष्ठु शोभना वाग् वाणी यस्याः सा सुवाक् तस्याः संबोधनं हे सुवाक् ! हे देवते ! त्वयि भवत्यां प्रियजल्पितायां मधुरभाषितायां सत्यां यत् स्वसहजं स्वेनात्मना सह जातं स्वसहजं स्वाभाविकमकृत्रिमं वीणास्वनं तन्त्रीशब्दं मूर्छां दशां अवाप प्राप । सङ्गीते—"सप्त स्वरास्त्रयो ग्रामा मूर्छनाः चैकविंशतिः" इति प्रणीतत्वादिति, मूर्छामूर्छनाशब्दावेकार्थावेव प्रत्ययान्तरभेदाद्भेद एव । "मोहो मूर्च्छा मतेर्भ्रमः" इति कोषः । मतेर्भ्रमत्वं प्रापेत्यर्थः । तर्हि तत्कोकिलरवं पिकशब्दं प्रतिकूलभावं श्रवणकटुत्वं किं न जातं ? अपि तु जातमेव । कथंभूतं ? तच्चारुचूतकलिकानिकरैकहेतुः चारु सुस्वादुमत् चूतानामाम्राणां कलिकानिकरं मञ्जरीसमूहं तदेवैकहेतुः कारणं यस्य तत् । अत एव कृत्रिमं कोकिलशब्दं, कृत्रिमाकृत्रिमयोरकृत्रिमस्याधिक्यात् कथं श्रवणसुभगं स्यात् इति त्वद्वाणीमाधुर्यं, वीणा-

कोकिलरवयोरनुपममिति भावः । कस्य ? श्रोतुः शृणोति वागमृतं स श्रोता तस्य श्रोतुः, त्वद्वाणीश्रवणानुरक्तस्य विदुष इत्यर्थः ॥ ६ ॥

त्वन्नाममन्त्रमिह भारतसम्भवानां, भक्त्यैति भारति विशां जपतामघौघम् ।
सद्यः क्षयं स्थगितभूवलयान्तरिक्षं, सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

टीका—हे भारति ! हे शासनदेवते ! हे सरस्वति ! इह लोके विशां मनुष्याणां भक्तजनानां अघौघं अघस्य दुष्कृतस्य ओघं अघौघं पापसमूहं सद्यस्तत्कालं क्षयं विनाशमेति प्राप्नोति । । किंविशिष्टानां विशां ? भारतसंभवानां भारतक्षेत्रे संभवा उत्पन्नाः सम्यगार्यभूमौ जाता भारतसंभवास्तेषां भारतसंभवानां भारतक्षेत्रजनितानामेवास्याः शासनाधिष्ठात्र्या उचितत्वात् । पुनः विशां किं कुर्वतां ? त्वन्नाममन्त्रं तव नाम त्वन्नाम तदेव मन्त्रो जापस्तं त्वन्नाममन्त्रं जपतां अभीष्टदेवतास्मरणं कुर्वतामित्यर्थः । किंविशिष्टमघौघं ? स्थगितभूवलयान्तरिक्षं स्थगिते आच्छादिते ऊर्ध्वगतिप्राप्यहेतुके भूवलयान्तरिक्षे पृथ्वीमण्डलाकाशे मनुष्यलोकस्वर्गलोकौ येन तत् स्थगितभूवलयान्तरिक्षं मनुज(लोक)स्वर्गनिरोधकं केवलमधोगतिहेतुकमित्यर्थः । तदघौघं किमिव क्षयमेति ? शार्वरमन्धकारं इव रात्रिभवं तम इव शर्वर्यां रात्रौ भवं शार्वरं तमः सूर्यांशुभिन्नं सूर्यांशुभिः सूर्यकिरणैर्भिन्नं विदारितं तमिस्रं सद्यः क्षयमेति । कीदृशं तमः ? स्थगितभूवलयान्तरिक्षं आच्छादितद्यावाभूमिकमिति ॥ ७ ॥

श्रीहर्षमाघवरभारविकालिदास–वाल्मीकिपाणिनिममट्टमहाकवीनाम् ।
साम्यं त्वदीयचरणाब्जसमाश्रितोऽयं, मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ॥ ८ ॥

टीका—हे वरदे ! हे सरस्वति ! अयं मल्लक्षणोजनः सेवकः त्वदीयचरणाब्जसमाश्रितः सन् तवेमौ त्वदीयौ चरणाब्जौ चरणकमलौ सं सम्यक् प्रकारेणाश्रितः संप्राप्तः श्रीहर्षमाघवरभारविकालिदासवाल्मीकिपाणिनिममट्टमहाकवीनां साम्यं तुल्यतां उपैति प्राप्नोति श्रीहर्षश्च माघश्च वरः श्रेष्ठो योऽसौ भारविर्वरभारविश्च कालिदासश्च वाल्मीकिश्च पाणिनिश्च ममट्टश्च श्रीहर्षमाघवरभारविकालिदासवाल्मीकिपाणिनिममट्टाः ते च ते महाकवयश्च तथा तेषां श्रीहर्षादिमहाकवीनां श्रीहर्षमाघभारविकालिदासा महाकाव्यकर्तारः, वाल्मीकी रामायणवक्ता, पाणिनिः सूत्रकृत् , ममट्टो महाभाष्यवृत्तिकारः, एते महाकवयस्तेषां तुल्यत्वं प्राप्नोतीत्यर्थः। युक्तोऽयमर्थः। ननु इति निश्चये उदबिन्दुः जलकणः उदकस्य बिन्दुः उदबिन्दुः उदकस्योदन्नादेशः। अब्जसमाश्रितः कमलपत्रा(धि)भिरूढः पानीयबिन्दुः मुक्ताफलकान्तिमुपैति, तद्वदयमपि तेषां साम्यमुपैति ८

विद्यावशारसिकमानसलालसानां, चेतांसि यान्ति सुदृशां धृतिमिष्टमूर्ते ।
त्वय्यर्यमत्विषि तथैव नवोदयिन्यां, पद्माकरेषु जलजानि विकाशभाञ्जि ॥ ९ ॥

टीका—हे इष्टमूर्ते! इष्टा वल्लभा मूर्तिः संहननं शरीरं यस्याः सा तस्याः संबोधनं हे इष्टमूर्ते ! सुदृशां सज्ज्ञानोपयोगिनां सुतरां पश्यन्तीति सुदृशस्तेषां सुदृशां चेतांसि चित्तानि त्वयि विषये धृतिं सुखं परमाह्लादत्वं यान्ति प्राप्नु-

वन्ति । किंविशिष्टानां सुदृशां ? विद्यावशारसिकमानसलालसानां विद्यावशानां विद्याविलासिनीनां रसिकमाने शृङ्गारादिज्ञाने सलालसाः सस्पृहाः तेषां विद्यावशारसिकमानसलालसानां तत्पुरुषः । ( यद्वा ) विद्यावशासु रसिकमानसेन लालसा येषां ते तेषामिति बहुव्रीहिः । ( उक्तमर्थं ) अर्थान्तरेण दृढयति—तथैव त्वयीव अर्यमत्विषि सूर्यप्रभायां जलजानि कमलानि धृतिं यान्ति । केषु ? पद्माकरेषु तडागेषु । किंविशिष्टायां त्विषि ? नवोदयिन्यां प्रातरुदयं प्रापितायां । किंविशिष्टानि जलजानि ? विकाशभाञ्जि विकाशं साह्लादत्वं भजन्ते इत्येवंशीलानि विकाशभाञ्जि प्रकर्षहर्षवन्तीति चेतांसि पयोजानि चेति ॥ ९ ॥

त्वं किं करोषि न शिवे नु समानमानान्, त्वत्संस्तवं पिपठिषो विदुषो गुरूहः ।
किं सेवयन्नुपकृतेः सुकृतैकहेतुं, भूत्याश्रितं य इह नात्मसमं करोति ॥ १० ॥

टीका—हे शिवे ! हे कल्याणिनि त्वं विदुषो विचक्षणान् समानमानान् मानेन ज्ञानेन सह समानः, समानः मानः सत्कारो येषां ते समानमानास्तान् । अथवा आत्मना समानं मानं ज्ञानं येषां ते ( तान् ) समानमानान् तुल्यज्ञानिनः ( किं ) न करोषि ? अपि तु करोषि इति । द्वौ नकारौ निर्णयं सूचयतः । किंविशिष्टान् विदुषः ? त्वत्संस्तवं तव स्तोत्रं गुणवर्णनं पिपठिषः पठितुमिच्छून् पठितुमिच्छन्तीति पिपठिषन्ति पिपठिषन्तीति पिपठिषः तान् पिपठिषः । युक्तोऽयमर्थः । इह जगति यः पुमान् भूत्याश्रितं धनाढ्यं पुरुषं सेवयन् प्रवर्तते । यत्तदोः (नित्य)संबन्धात् तं सेवमानं नरं लक्ष्मीवान् किं आत्मसमं आत्मना तुल्यं समृद्धं । अथवा मया लक्ष्म्या सह वर्तत इति समस्तं आत्मना स्वभावेन समं धनीश्वरं न

करोति ? अपि तु करोत्येवेत्यन्वयः । किंविशिष्टं भूत्याश्रितं ? सुकृतस्य पुण्यस्य एकोऽद्वितीयो हेतुः सुकृतैकहेतुस्तं । किंविशिष्टो यः पुमान् ? गुरूहः ऊहि वितर्के ऊहनं ऊहो विचारः गुरुर्गरिष्ठ ऊहो विचारो यस्य स गुरूहो दीर्घविचारवान् । कस्याः ? उपकृतेः उपकारस्य, दीर्घदर्शी आयतेः फलं विचारयतीत्यर्थः ॥ १० ॥

यत्त्वत्कथामृतरसं सरसं निपीय, मेधाविनो नवसुधामपि नाद्रियन्ते ।
क्षीरार्णवार्णं उचितं मनसाऽप्यवाप्य, क्षारं जलं जलनिधेरशितुं क इच्छेत् ॥ ११ ॥

टीका—हे भगवति ! मेधाविनः पण्डिता नवसुधामपि नूतनामृतमपि नाद्रियन्ते सुधां नाङ्गीकुर्वन्ति । किं कृत्वा ? यत्सरसं सस्नेहं त्वत्कथामृतरसं तव स्तवामृतरसं निपीय नितरां पीत्वा सादरमास्वाद्येत्यर्थः । युक्तं चैतत् । कः पुरुषः मनसाऽपि चेतसापि जलनिधेर्लवणसमुद्रस्य क्षारं जलमशितुं सादरमत्तुं पातुमिच्छेत् ? अपि तु न कोऽपि वाञ्छेत् । अश दीप्त्यदनयोर्भ्वादिधातुः । किं कृत्वा ? उचितं मनोऽभीष्टं सुधातुल्यं क्षीरार्णवार्णः क्षीरार्णवस्य क्षीरसमुद्रस्य अर्णः पानीयं क्षीरार्णवार्णः क्षीरोदकं अवाप्य प्राप्य इति अनेन त्वत्कथामृतेन सुधा तिरस्कृतेति भावः ॥ ११ ॥

जैना वदन्ति वरदे! सति साधुरूपां, त्वामामनन्ति नितरामितरे भवानीम् ।
सारस्वतं मतविभिन्नमनेकमेकं, यत्ते समानमपरं न हि रूपमस्ति ॥ १२ ॥

टीका—हे सति ! हे वरदे ! वरं ददातीति वरदा तस्याः संबोधनं हे वरदे, यद्यस्मात्कारणात् ते तव समानं तुल्यं अपरं

अन्यत् हि निश्चितं सारस्वतं रूपं नास्ति न वर्तते, किंतु तवेदं रूपं, सरस्वत्या इदं सरस्वतीसंबन्धि, त्वमेव सरस्वतीत्यभिप्रायः। कीदृग्रूपं ? एकमद्वितीयमपि अनेकं बहुविधं। अत एव किंविशिष्टं रूपं ? मतविभिन्नं सर्वमतेषु षड्दर्शनेषु विशेषेण भिन्नं भेदं प्राप्तं बहुधा जातमिति। तदेव दर्शयति—तत्तस्मात्कारणात् हे सति ! जैना जिनोपासकाः तां साधुरूपां वदन्ति कथयन्ति। प्रशस्ता साध्वी साधुरूपा तां साधुरूपां। प्रशंसायां रूपप्प्रत्ययः(प्रशस्ते रूपपू७-३-१०)। तसिलादिष्वाकृत्वसुच इति ( पाणिनेः ) सूत्रात् साध्वीशब्दस्य पुंवद्भावः। ब्राह्मी साध्वीति ख्यातिः। पुनर्हे वरदे ! इतरेऽन्ये शिवोपासका विबुधा नितरां निश्चयेन त्वां भवानीं आमनन्ति भणन्ति। ततस्तवैकं सारस्वतं रूपं मतभेदेनानेकधा ख्यातं। अथवा ते तवापरं अपूर्वरूपं एकं न हि ( अस्ति किंतु ) अनेकमस्तीत्यन्वयः। कीदृग्रूपं ? समानं मानेन ज्ञानेन सह वर्तत इति समानं। अन्यविशेषणं प्राग्वत्, अन्वयोऽपीति ॥ १२ ॥

मन्ये प्रभूतकिरणौ श्रुतदेवि दिव्यौ, त्वत्कुण्डलौ किल विडम्बयतस्तमायाम् ।
मूर्तं दृशामविषयं भविभोश्च पूष्णो, यद्वासरे भवति पाण्डुपलाशकल्पम् ॥ १३ ॥

टीका—हे श्रुतदेवि ! दिव्यौ प्रधानौ त्वत्कुण्डलौ तव कुण्डलौ कर्णाभरणे त्वत्कर्णभूषणे पूष्णः सूर्यस्य च पुनः भविभोश्चन्द्रस्य भानां नक्षत्राणां विभुः स्वामी भविभुस्तस्य भविभोः। भविभुरिति यौगिकशब्दः। मूर्तं मण्डलं विडम्बयतः विडम्बनां कुरुतः रवीन्दुबिम्बं हीनीकुरुत इत्यर्थः। किलेति संभावने। यत्पूष्णः मूर्तं सूर्यबिम्बं तमायां रात्रौ दृशां चक्षुषामविषयं अग्राह्यभावं भवति, तेजस्वी स्वात्मानं विडम्बनां प्राप्यादृश्यो बभूवेत्यर्थः। यत्पूर्वानुवृत्त्याऽनुक्तचकारोऽपि

ग्राह्यः च पुनरिन्दुबिम्बं वासरे दिवसे पाण्डुपलाशकल्पं ईषत्पाण्डुपलाश( मिति पाण्डुपलाश ) कल्पं । ईषदर्थे कल्प-देश्यदेशीयरः प्रत्ययाः (अतमबादेरीषदसमाप्तेकल्पप्देश्यप् देशीयर् ७-३-११) । तथा पाण्डु ईषतश्वेतं परिपक्वद्रुमपत्रं तद्वत्पाण्डुपलाशकल्पं भवति तिष्ठति, जडप्रकृतित्वादपमानितोऽपि निश्छायः सन् विलक्षोऽपि जडस्तिष्ठतीति भावः॥१३॥

ये व्योमवातजलवह्निमृदां चयेन, कायं प्रहर्षविमुखांस्त्वदृते श्रयन्ति ।
जातानवाम्ब जडताद्यगुणानणून्मां, कस्तान्निवारयति सञ्चरतो यथेष्टम् ॥ १४ ॥

टीका—हे अम्ब ! हे मातः! त्वं मां अव रक्ष पालय । हे मातः ये जाता उत्पन्ना अणवः सूक्ष्मा जडतादयोऽगुणा दोषा व्योमवातजलवह्निमृदां गगनपवनसलिलाग्निपृथ्वीनां चयेन समूहेन पुद्गलसंचयेनेति करणे तृतीया कायं देहं श्रयन्ति आश्रयन्ति शरीरं वेष्टयन्ति । व्योम च वातश्च जलं च वह्निश्च मृच्च व्योमवातजलवह्निमृदस्तासां व्योमवातजलवह्निमृदां संहत्या पञ्चभूता आकाशपृथिव्यप्तेजोवायवः आत्मसंबद्धाः, तत्संबद्धं शरीरं पञ्चभूतात्मकं वपुर्जडात्मकं श्रयन्ति, ते चैकीभावेन परिणमन्ति इति तात्पर्यं । हे अम्ब ! कः त्वदृते त्वां विना, ऋतेयोगे त्वदिति पञ्चमी, त्वत्तोऽन्यः कः पुरुषोत्तमो जातान् उत्पन्नान् अणून् सूक्ष्मान् जडताद्यगुणान् मूर्खतादिदोषान् संचरतः शरीरात् यथेष्टं तान् निवारयति शरीरात् स्फेटयति ? त्वमेव जडतादिदोषनिवार(रि)का, नान्य इत्युपयोगः। किंविशिष्टान् जडताद्यगुणान् ? प्रहर्षविमुखान् प्रकृष्टो हर्षः प्रहर्षः प्रकृष्टप्रज्ञाप्रकाशस्तस्माद्विमुखाः पराङ्मुखा विपक्षभूताः प्रहर्षविमुखास्तान् सद्बुद्धि-

वृद्धिनिरोधकानित्यर्थः । तथा पुनः किंविशिष्टान् जडताद्यगुणान् ? सञ्चरतः स्वदेहाज्जातान् । नृतिर्यग्वपुर्भूतात्मकमिति श्रुतिः ॥ १४ ॥

अस्मादृशां वरमवाप्तमिदं भवत्याः, सत्याव्रतोरु विकृतेः सरणिं न यातम् ।
किं चोद्यमैन्द्रमनघे सति सारदेऽत्र, किं मन्दराद्रिशिखरं चलितं कदाचित् ॥ १५ ॥

टीका—संबोधनपदानि—हे अनघे ! न विद्यतेऽघं पापं यस्याः साऽनघा तस्याः संबोधनं हेऽनघे निःपापे, हे पुण्यवति, तथा हे सति, हे सारदे, अत्र स्तवनारम्भे अस्मादृशामिदं मम बुद्धिस्थं वरं मादृशां मनीषिणां वरं नवीनशास्त्रकरणरूपं विकृतेर्विकारस्य सरणिं पन्थानं मार्गं न यातं न प्राप्तं सदुक्तिविघ्नतां न प्राप्तमित्याशयः । किंविशिष्टं वरं ? भवत्याः त्वत्तः त्वत्सकाशादवाप्तं लब्धं । पुनः किंविशिष्टं वरं ? सत्याव्रतोरु सत्या वेदव्यासमाता सत्यवती तस्या व्रतं पतिव्रताधर्मः तद्वदुरु गरिष्ठं निश्चलं सत्याव्रतोरु । तथा सत्या शीलवती सीता तस्या व्रतं शीलं तद्वदुरु गरिष्ठं अप्रतिहतं अस्खलितं यत् सत्याव्रतोरु । अर्थान्तरन्यासेन दृढयति—हे सति अत्र लोके किं चोद्यं किमाश्चर्यं ? यत् ऐन्द्रं इन्द्रस्येदं ऐन्द्रं इन्द्रसंबन्धि मन्दराद्रिशिखरं मेरुगिरिश्रृङ्गं कदाचित् युगान्तेऽपि किं चलितं ? अपि तु न चलितं । यद्यपि मन्दराद्रिशिखरकथनेन निश्चलत्वं ज्ञापितं, तथापि ऐन्द्रं ( इति ) इन्द्रशक्तिद्योतकं पदं । न च देवशक्त्याऽन्तरेण निश्चलत्वं प्रतीयते इन्द्रसान्निध्यात् इन्द्रगिरिर्गिरिर्मेरुरिति कोषः । सामान्यदेवतासंख्यसहस्रेणापि अप्रतिहतावयवः शाश्वतः सुमेरुस्तस्य शिखरं तद्वत्त्वत्तः प्राप्तं अस्माकं वरं त्वत्सान्निध्यात्मैव देवता त्वदनुभावदेव-

शक्तिमत् तेन ममापि निश्चल(त्त्व)मेव यातं ( प्राप्तं ) । सीताशीलमेरुशृङ्गयोरुपमानसाम्यं दर्शितं । तृतीयं तवापि वरप्रदानं । तत्र सर्वेषां देवताधिष्ठातुरुपादानमुचितं । न च देवशक्तेरनाश्रयणात् कर्तुं किंचित् स्थातुं (स्नु)तद्वत्त्वत्तोऽपि लब्धमपि वरं निश्चलमिति भावार्थः । अथवा किंचोद्यमिति हे मातः अत्र किं उद्यं किं कथ्यं किमुच्यं "वद् व्यक्तायां वाचि" समासे क्यपि ( वदः सुपि क्यप् च ) संप्रसारणं । क्यबन्तं नपुंसकं । ऐन्द्रं मन्दराद्रिशिखरं मेरुशृङ्गं च पुनः किं चलितं ? । उद्यते इति उद्यं । अत्रेदं उद्यं वदितुं योग्यमेव ॥ १५ ॥

निर्माय शास्त्रसदनं यतिभिर्ययैकं, प्रादुष्कृतः प्रकृतितीव्रतपोमयेन ।
उच्छेदितांहउलपैः सति गीयसे चि-द्दीपोऽपरस्त्वमसिनाऽथ जगत्प्रकाशः ॥ १६ ॥

टीका——अथ वरप्रदानानन्तरं हे सति ! यतिभिर्जितेन्द्रियैर्मुनिभिः सा त्वं गीयसे यशोविषयीक्रियसे इत्यर्थः । सा का ? यया त्वया शास्त्रमेव सदनं गृहं शास्त्रगेहं निर्माय निष्पाद्य नितरां कृत्वा अपरोऽपूर्वः अन्यैरवगाहितुमशक्यः चिद्दीपः चित् ज्ञानमेव दीपः चिद्दीपः प्रादुष्कृतः प्रकटीकृतः मान्द्यतमोभिदे स्थापितः । किंविशिष्टश्चिद्दीपः ? जगत्प्रकाशः जगत् प्रकाशयतीति जगत्प्रकाशः जगदुद्योतकः ययेति यत्तदोर्नित्यसंबन्धादनुक्तमपि सेतिपदं गृहीतं । पुनः किंविशिष्टैर्यतिभिः ? उच्छेदितांहउलपैः उच्छेदिता विनाशिताः प्रणाशं नीता अंहांसि पापान्येव उलपाः सगुच्छा वल्ल्यो यैस्ते उच्छेदितांहउलपास्तैः उच्छेदितांहउलपैः । "गुल्मिन्युलपवीरुधः" इति हैमः । केन ? प्रकृतितीव्रतपोमयेन असिना खड्गेन प्राधान्यं तीव्रमुत्कृष्टं तपो व्रतं यस्मिन् स तीव्रतपोमयः । प्राधान्यप्राचुर्यविकारेषु

मयट् प्रत्ययः । प्रकृत्या स्वभावेन तीव्रतपोमयं यत्र स प्रकृतितीव्रतपोमयस्तेन प्रकृतितीव्रतपोमयेन । यतस्तीक्ष्णशस्त्रेण सगुल्मा अपि वल्ल्यश्छिन्द्यन्त इति भावः ॥ १६ ॥

यस्या अतीन्द्रगिरिराङ्गिरसप्रशस्य–स्त्वं शाश्वती स्वमतसिद्धिमही महीयः ।
ज्योतिष्मयी च वचसां तनुतेज आस्ते, सूर्यातिशायि महिमाऽसि मुनीन्द्रलोके ॥१७॥

टीका—पूर्वोक्तसंबोधनपदेन हे सति सा त्वं शाश्वती शश्वन्निरन्तरं भवा शाश्वती । भवाद्यर्थेऽण् ( प्रत्ययः ) । तदन्तात् ( च ) ङीप् । सदा वर्तमाना शासनाधिष्ठात्री असि वर्तसे । देवताया उत्कृष्टात्यन्तविरहकालाभावात् । अथवा विमानाधिपतौ पञ्चत्वं प्राप्ते तत्स्थाने तत्तुल्यवर्णनामगोत्रविक्रमाक्रान्तो देव उत्पद्यते इति सैद्धान्तिकं वचो विचार्य देवता शाश्वतीति प्रतीतास्ति, नात्र संदेहः । सा का ? यस्यास्तव वचसां वाग्विलासानां महिमा मुनीन्द्रलोके मन्यन्ते कालत्रयावस्थां इति मुनयस्तेषां इन्द्रः परमैश्वर्याधिक्याद्गणधरो द्वादशाङ्गपाठी, सचासौ लोकश्च मुनीन्द्रलोको गणधरजनस्तस्मिन् मुनीन्द्रलोके हेयज्ञेयोपादेयरूपेण प्रभुत्वमान् आस्ते तिष्ठति । च पुनर्यस्यास्तव तनुतेजः तनोर्वर्णात्मकस्य तेजो लिपेर्मनोज्ञन्यासरूपं तच्च मुनीन्द्रलोके आस्ते तिष्ठति । यतो मुनयः पठनलिखनपरा भवन्तीति श्रुतिः। किंविशिष्टा त्वं? स्वमतसिद्धिमही स्वमते जैनमते अथवा स्वमते सिद्धीनां ज्ञानादिलक्ष्मीणां मही भूमिरुत्पत्तिस्थानं स्वमतसिद्धिमही । अथवा सिद्धिर्मोक्षस्थानं सा चासौ मही पृथ्वी स्वमतसिद्धिमही त्वमेव “ इसिप्पब्भारा पुढवी ” सापि शाश्वती त्वं वाग्रूपा सिद्धिः त्वत्तः सि(शि)लापि सुलभा । अन्यच्च शिवोपासकानां मते सिद्धयोऽष्टसिद्धयो-

ऽणिमादयस्तासां मही भूमिरुत्पत्तिस्थानं या सा स्वमतसिद्धिमही पुनः किंविशिष्टा त्वं ? ज्योतिष्मयी प्रधानं ज्योतिरात्मकान्तिर्यस्यां सा ज्योतिष्मयी। अत्रापि प्राधान्ये मयट् ( प्रकृते मयट्. ७-३-१ )। ( किं विशिष्टः ? इन्द्रगिरिमतिक्रान्तः अतीन्द्रगिरिः) किंविशिष्टो वचसां महिमा ? आङ्गिरसप्रशस्यः अङ्गिरसः ऋषेरपत्यं आङ्गिरसो बृहस्पतिर्देवः तस्यापि प्रशस्यः प्रशंसनीयः वर्णनीयः यः स आङ्गिरसप्रशस्यः देवगुरुश्लाघनीय इत्यर्थः। तस्यापि वाचस्पतेरभिधेयत्वादस्या अधिकतादर्शिता। किंविशिष्टं तनुतेजः ? महीयः अतिशयेन महत् गरिष्ठं महीयः बहुविस्तारमत्। "अनन्तपारं किल शब्दशास्त्रं" इतिवचनात् शब्दवर्णानामानन्त्यात्। पुनः किंविशिष्टं तनुतेजः ? सूर्यातिशायि सूर्यमतिशेते इत्येवंशीलं सूर्यातिशायि त्रैकालिकपदार्थप्रकाशकं भानोरप्यधिकमित्यर्थः॥ १७॥

स्पष्टाक्षरं सुरभि सुभ्रु समृद्धशोभं, जेगीयमानरसिकप्रियपञ्चमेष्टम्।
देदीप्यते सुमुखि ते वदनारविन्दं, विद्योतयज्जगदपूर्वशशाङ्कबिम्बम्॥ १८॥

टीका—हे सुमुखि ! सुष्ठु शोभनं मुखं यस्याः सा सुमुखी तस्याः संबोधनं हे सुमुखि ते तव वदनारविन्दं वदनमेव मुखमेव अरविन्दं कमलं वदनारविन्दं मुखकमलं देदीप्यतेऽतिशयेन दीप्यतीति देदीप्यतेऽतिशयेन शोभत इत्यर्थः। किंविशिष्टं वदनारविन्दं ? स्पष्टाक्षरं स्पष्टानि प्रकटानि अक्षराणि अकारादीनि द्विपञ्चाशद्वर्णाः यस्मिंस्तत् स्पष्टाक्षरं। पुनः किंविशिष्टं वदनारविन्दं ? सुरभि सुगन्धि। पुनः किंविशिष्टं ? सुभ्रु शोभना भ्रुवो यस्मिंस्तत् सुभ्रु। पुनः किंविशिष्टं ? समृद्धशोभं समृद्धा सम्यक्प्रकारेण वृद्धिं प्राप्ता शोभा यस्मिंस्तत् समृद्धशोभं। पुनः किंवि-

शिष्टं वदनारविन्दं ? जेगीयमानरसिकप्रियपञ्चमेष्टं गीताभिलाषिरसिकजनवाञ्छितपञ्चमरागमनोहरं रसिकानां वसन्तोत्सवे पञ्चमरागप्रियत्वं सरस्वत्याः तन्त्रीवादनपञ्चमरागप्रियत्वं यथा—"सरस्वत्यास्तु कच्छपीकोकिलयोः पञ्चमस्वरे मनोऽभीष्टमिति" संगीतश्रुतिः । पुनस्तव वदनं किं कुर्वत् ? जगद्विश्वं विद्योतयत् विशेषेण द्योतयत्प्रकाशयत् । पुनः किंविशिष्टं वदनारविन्दं ? अपूर्वशशाङ्कबिम्बं अपूर्वः अनन्योपमेयः स चासौ शशाङ्कश्चन्द्रस्तस्य बिम्बमिव मण्डलमिव बिम्ब वर्तुलं यत्तत् ॥ १८ ॥

प्राप्नोत्यमुत्र सकलावयवप्रसङ्गि–निष्पत्तिमिन्दुवदने शिशिरात्मकत्वम् ।
सिक्तं जगत्त्वदधरामृतवर्षणेन, कार्यं कियज्जलधरैर्जलभारनम्रैः ॥ १९ ॥

टीका—हे इन्दुवदने ! इन्दुवच्चन्द्रवद्वदनं यस्याः सा इन्दुवदना तस्याः संबोधनं हे इन्दुवदने चन्द्रमुखि अमुत्र युगे संसारव्यवहारे अमुष्मिन्नित्यमुत्रेत्यव्ययं । त्वदधरामृतवर्षणेन तव अधरौ त्वदधरौ त्वदधराभ्यां अमृतवर्षणं सुधास्रवणं तेन त्वदधरामृतवर्षणेन सिक्तं सिञ्चितं जगद्विश्वं सकलावयवप्रसङ्गिनिष्पत्तिं सकलानां समस्तानां अवयवानां प्रसङ्गोऽस्या अस्तीति सकलावयवप्रसङ्गिनी, सा चासौ निष्पत्तिश्च संपूर्णप्राप्तिलक्षणा तां सकलावयवप्रसङ्गिनिष्पत्तिं समग्रसमृद्धिरससिद्धिसंपादिकां निष्पत्तिं प्राप्नोति । तत्प्राप्तौ च पुनः शिशिरात्मकत्वं शीतलस्वभावत्वं प्राप्नोति । तत्र विशेष्यपदान्तरेऽनुक्तचकारोऽपि ग्राह्यः, त्वद्वचनामृतसिक्तं जगत् शीतलं जातं सर्वावयवनिष्पत्तिसंपन्नं च भूतं तदा जलधरैर्मेघैः कियत्कार्यं ? अपि तु न कार्यं । किंविशिष्टैर्जलधरैः ? जलभारनम्रैः जलस्य भारो बहूपचयः तेन नम्रा

नम्रतां प्राप्ता जलभारनम्रास्तैर्जलभारनम्रैः । सूर्यातपे दीपारोपवत् आघ्राते जेमनामन्त्रणवत् अत्रापि सुधासिक्ते जलसेचनमन्याय्यम् ॥ १९ ॥

**मातस्त्वयि मम (मातर्मम त्वयि) मनो रमते मनीषि, मुग्धागणे न हि तथा नियमाद्भवत्याः।**
**त्वस्मिन्नमेयपणरोचिषि रत्नजातौ, नैवं तु काचशकले किरणाकुलेऽपि ॥ २० ॥**

टीका—हे मातर्यथा मम मनस्त्वयि रमते रुचिं लभते । हि निश्चितं । तथाऽन्यस्मिन् मुग्धागणे स्त्रीगणे मुह्यन्ति कामादिचेष्टास्विति मुग्धास्तासां गणः समूहः मुग्धागणस्तस्मिन् मुग्धागणे मम मनो न रमते न धृतिं प्राप्नोति । कस्मान्नियमान्निश्चयात् संयमादिगुणाराधनात्, यादृशी देवीषु क्व तादृशी मानुषीषु धृतिरिति भावः । किंविशिष्टे मुग्धागणे ? भवत्याः त्वत्तः त्वस्मिन् हीने । त्वच्छब्दो हीनार्थवाचकः सर्वादिगणे प्रतीत एव "त्वदधरमधुरमधूनि पिवन्तः" इति प्रयोगदर्शनात् । भवत्या अयोनिजन्मत्वेनाधिक्यं मानुषीणां योनिजन्मत्वेन हीनता । अर्थान्तरेण दृष्टान्तेन दृढयति—ममेव कस्यचित् परीक्षकस्य मनो रत्नजातौ त्वदुपमेयायां तु पुनः यथा रमते। किंविशिष्टायां रत्नजातौ ? अमेयपणरोचिषि बहुमूल्यकान्तौ अमेयः प्रमाणं कर्तुमशक्यः पणः क्रयो यस्याः सा अमेयपणा एवंविधा रोचिर्द्युतिर्यस्यां साऽमेयपणरोचिस्तस्यां अमेयपणरोचिषि । एवं पूर्वोक्तवाक्येन मुग्धागणोपमाने काचशकले काचस्य शकलं खण्डं तस्मिन् काचशकले काचखण्डे परीक्षकमनो न धृतिमेति। किंविशिष्टे काचशकले ? किरणाकुलेऽपि किरणैः क्षणभ-

ङ्कुराभिः चकचकितकान्तिभिः आकुलं मिश्रितं संमीलितं अपि निश्चयेन किरणाकुलं तस्मिन् किरणाकुलेऽपि । अनादर एवेति भावः ॥ २० ॥

चेतस्त्वयि श्रमणि ! पातयते मनस्वी, स्याद्वादिनिम्ननयतः प्रयते यतोऽहम् ।
योगं समेत्य नियमव्यवपूर्वकेन, कश्चिन्मनो हरतिनाऽथ भवान्तरेऽपि ॥ २१ ॥

टीका—हे श्रमणि ! श्रमं खेदं दुष्टाष्टकर्मजनितं नयति स्फेटयतीति श्रमणी । अथवा सहजातौ श्रमौ रागद्वेषरूपौ ताभ्यां रहिता श्रमणी तस्याः संबोधनं हे श्रमणि ! यदि कदापि कश्चिन्मनस्वी पाखण्डिको भवान्तरेऽपि अन्यभवेऽपि मम मनः पातयते भ्रष्टं कुर्यात् । कस्मात् ? स्याद्वादिनिम्ननयतः स्याद्वादिनां तीर्थकृतां निम्नो गम्भीरो वह्वर्थो योऽसौ नयो नैगमादिसप्तधारूपः स्याद्वादिनिम्ननयः तस्मात् स्याद्वादिनिम्ननयतः, पञ्चम्यास्तस् (आद्यादिभ्यः ७-२-८४) यतो यस्मात्कारणात्पूर्वोक्तहेतोः अहं तच्चेतः चित्तं त्वयि विषये सप्तभङ्गीसध्रीच्यां विषये प्रयते प्रकर्षेण यते यत्नं कुर्वे निश्चलं करोमीत्यर्थः ।सप्तनयवतां शासनाधिष्ठातृत्वेन सहायकर्त्री त्वमेव ख्यातेति, श्रमणि इति संबोधनपदमपि प्रतीतं । किं कृत्वा ? नियमव्यवपूर्वकेन हरतिना सह योगं समेत्य नियमो निश्चयः, ( स च ) विश्च अवश्च व्यवौ उपसर्गौ, ते च पूर्वे यस्य स नियमव्यवपूर्वकस्तेन नियमव्यवपूर्वकेन। हरतिना हृञ् हरणे ( इति ) धातुना सह "इक्शितपौ धातुनिर्देशे" ( इतिवचनात् ) हरतिरूपं तेन हरतिना व्यवपूर्वेण व्यवहार इति शब्दं उत्पद्यते तयोरेकपदे निश्चयव्यवहाराभ्यां नयाभ्यां योगं समेत्य एकस्थाने संयोज्य हृदि अवधार्य निश्चयव्यवहाररूपः स्याद्वादिनां नयः, द्वैतवादिनो जैना इति ॥ २१ ॥

सघनरश्मि सघनाः सान्द्रा रश्मयः किरणा यस्य तत् सघनरश्मि । पुनः किंविशिष्टं त्वन्मुखघनं? महाप्रभावं महान् प्रभावः प्रतापो यस्य तत् महाप्रभावं ॥ २४ ॥

अत आह—

कैवल्यमात्मतपसाऽखिलविश्वदर्शि, चक्रे ययादिपुरुषः प्रणयां प्रमायाम् ।
जानामि विश्वजननीति च देवते ! सा, व्यक्तं त्वमेव भगवन् ! पुरुषोत्तमोऽसि ॥ २५ ॥

टीका—हे देवते! दीव्यति क्रीडति परमानन्दपदे इति देवस्तस्य भावे ताप्रत्ययः, तान्तः स्त्रियां देवता तत्संबोधनं हे देवते अहं यां विश्वजननीति जानामि । अन्योक्ते [1]प्रथमेति सूत्रात् द्वितीयास्थाने प्रथमा इतियोगे विश्वजननीं इति विश्वजननीति शब्दः, "क्रमादमुं नारद इत्यबोधि सः" ( माघे १ स० ३ ) इति महाकविप्रयोगदर्शनाच्चाह । अहं यां विश्वमातरं वेद्मि, व्यक्तं प्रकटं सा त्वमेव विश्वमाताऽसि वर्तसे। पुनः सा का ? यया त्वया आदिपुरुष आदिदेवः प्रणयां चक्रे सस्नेहीकृतः आदौ पुरुष आदिपुरुषः हस्तावलम्बनेन जगद्विधिप्रवर्तको विदधे । च पुनः यया त्वया कैवल्यं केवलज्ञानस्य भावः कैवल्यं त्वया प्रणयां चक्रे स्ववशं कृतं । कस्यां ? प्रमायां सत्यज्ञाने यथार्थानुभवः प्रमा तस्यां । केन ? आत्मतपसा आत्मनस्तप आत्मतपस्तेन आत्मतपसा निजदेहजनितानुष्ठानेन । किंविशिष्टं कैवल्यं ? अखिलविश्वदर्शि अखिलं विश्वं पश्यतीत्येवंशीलं अखिलविश्वदर्शि । पुनः किंविशिष्टं कैवल्यं? भगवन् भगो माहात्म्यं

१ चन्द्रिकायाम् ।

अस्यास्तीति भगवन् बहुमहिम । किंविशिष्ट आदिपुरुषः ? पुरुषोत्तमः पुरुषेषूत्तमः पुरुषोत्तमः प्रधानपुरुष इति ॥ २५ ॥

सिद्धान्त एधिफलदो बहुराज्यलाभो, न्यस्तो यया जगति विश्वजनीनपन्थाः ।
विच्छित्तये भवततेरिव देवि मन्था–स्तुभ्यं नमो जिनभवो दधिशोषणाय ॥ २६ ॥

टीका—हे देवि ! तस्यै तुभ्यं नमः । ययेतिसंबन्धादनुक्तमपि तस्यैपदं गृहीतं । तस्यै कस्यै यया त्वया लिपिरूपत्वेन एष सिद्धान्तः द्वादशाङ्गप्रवचनरूपः न्यस्तः स्थापितः । किंविशिष्टः सिद्धान्तः ? एधिफलद एधते वर्धते इत्येवंशीलं एधि वर्धमानं फलं ( तत् ) ददातीति एधिफलदः, विशुद्धश्रुतिश्रद्धावशात् नृभवादमरत्वं, दैवात् ( च ) भवान्तरे मोक्ष इति फल-वृद्धिः । पुनः किंविशिष्टः सिद्धान्तः ? बहुराज्यलाभः बहु प्रचुरं राज्यं राज्ञ इदं कर्म राज्यं तस्य लाभः तच्छ्रद्धासहितश्रव-णाच्चक्रीन्द्रसुरेन्द्रपदवीप्राप्तिर्यस्मात्स बहुराज्यलाभः । पुनः किंविशिष्टः सिद्धान्तः ? जगति संसारे विश्वजनीनपन्थाः वि-श्वजनेभ्यः समस्तलोकेभ्यः हितो हितकारी पन्था मार्गो योऽसौ विश्वजनीनपन्थाः । पुनः किंविशिष्टः सिद्धान्तः ? जिन-भवः जिनेभ्यः केवलिभ्यो भव उत्पत्तिर्यस्य स जिनभवः, "अर्हद्वक्त्रप्रसूत" इत्यसौ त्वया न्यस्तः । कस्यै ( किमर्थं ) भवततेः भवानां संसारजन्मनां ततिः श्रेणिर्भवततिस्तस्या भवततेः विच्छित्तये विनाशाय, तच्छ्रवणाद्भवभ्रमणं न भवती-त्यभिप्रायः । सिद्धान्तः क इव ? मन्था इव मन्थनदण्ड इव । कस्मै ( किमर्थं ) दधिशोषणाय दध्नः शोषणं दधिशोषणं तस्मै दधिशोषणाय लोकैर्यथा मन्थाः स्थापितः । किंविशिष्टो मन्थाः ? बहुराज्यलाभः अत्र रलयोः सावर्ण्यात् बहुलाज्य-लाभ इति विशेषणं बहुलं प्रभूतं आज्यं घृतं तस्य लाभो यस्मात्स बहुलाज्यलाभः । अन्यानि विशेषणानि पूर्ववत् ॥ २६ ॥

मध्याह्नकालविहृतौ सवितुः प्रभायां, सैवेन्दिरे गुणवती त्वमतो भवत्याम् ।
दोषांश इष्टचरणैरपरैरभिज्ञैः, स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७ ॥

टीका—हे इन्दिरे ! हे लक्ष्मि ! इन्दति परमैश्वर्येण राजते इति इन्दिरा सर्वगुणसंपूर्णा नाम्नामानन्त्यात् ( तस्याः ) संबोधनं हे इन्दिरे हे कमले सर्वेषां संपत्प्रदे, सैव त्वं गुणवती बहुगुणयुताऽसि वर्तसे । अतः कारणात् इष्टचरणैः इष्टं प्रियं चरणं चारित्रं येषां ते तैः इष्टचरणैर्मुनिभिः, अभिज्ञैश्चतुरैरपरैरन्यैरन्यतीर्थिकैः कुलिङ्गिभिरपि भवत्यां त्वयि कदाचित्स्वप्नान्तरेपि निद्रावशे स्वप्नमध्येऽपि दोषांशोऽगुणलेशः नेक्षितो न विलोकितो न दृष्टः । भवत्यां कस्यामिव ? सवितुः सूर्यस्य प्रभायामिव कान्तौ इव, यथाऽभिज्ञैः सूर्यप्रभायां दोषांशः दोषा रात्रिस्तस्या अंशो लेशोऽपि न प्राप्यते । किंविशिष्टायां प्रभायां ? मध्याह्नकालविहृतौ अह्नो मध्यं मध्याह्नः स चासौ कालश्च मध्याह्नकालस्तस्मिन् विहृति-र्विहरणं यस्याः सा मध्याह्नकालविहृतिस्तस्यां मध्याह्नकालविहृतौ, मध्याह्नवेलायां सर्वथा दोषाभावस्तद्वत्त्वय्यपि॥२७॥

हारान्तरस्थमयि कौस्तुभमत्र गात्र—शोभां सहस्रगुणयत्युदयास्तगिर्योः ।
वन्द्याऽस्यतस्तव सतीमुपचारि रत्नं, बिम्बं रवेरिव पयोधरपार्श्ववर्ति ॥ २८ ॥

टीका—हे इन्दिरे !अयि इति कोमलामन्त्रणे अतोऽस्मात्कारणात् त्वं वन्द्याऽसि वन्दितुं स्तोतुं योग्या वन्द्या वर्तसे । अत इति किं ! अत्र त्वयि विषये कौस्तुभं रत्नं गात्रशोभां शरीरशोभां सहस्रगुणयति सहस्रगुणं करोतीति सहस्र-

गुणयति । किंविशिष्टं कौस्तुभं ? हारान्तरस्थं हारस्य अन्तरे मध्ये तिष्ठतीति हारन्तरस्थं हारमध्ये प्रोतमिति । पुनः किंविशिष्टं कौस्तुभं ? तव भवत्याः पयोधरपार्श्ववर्ति पयोधरयोः कुचयोः पार्श्वे वर्तत इत्येवंशीलं पयोधरपार्श्ववर्ति । किंविशिष्टां गात्रशोभां ? सतीं विद्यमानां नित्यवर्तिनीमिति । कौस्तुभं किमिव ? रवेः सूर्यस्य बिम्बं इव, वर्तुलत्वात्साम्यं । किंविशिष्टं रवेर्बिम्बं ? उदयास्तगिर्योः गिरिशब्दः प्रत्येकं संबद्धः उदयगिरिश्चास्तगिरिश्च उदयास्तगिरी तयोरुदयास्तगिर्योः उप समीपे चरति गच्छतीति उपचारि समीपगामि, कौस्तुभस्योष्णांशुमण्डलोपमानं, पयोधरयोरुदयास्ताचलयोरुपमानमिति ॥ २८ ॥

अज्ञानमात्रतिमिरं तव वाग्विलासा, विद्याविनोदिविदुषां महतां मुखाग्रे ।
निघ्नन्ति तिग्मकिरणा निहिता निरीहे, तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥ २९ ॥

टीका—हे निरीहे ! निर्गता ईहा वाञ्छा यस्याः सा निरीहा अयाचिव्रतत्वान्निःस्पृहा तत्संबोधनं हे निरीहे । अथवा नितरां ईहते वाञ्छति यां सर्वो लोकः सा निरीहा सर्वेषां वरप्रदानात् तत्संबोधनं हे निरीहे । तव वाग्विलासा भवत्या वाचां विलासा वाग्विलासाः महतां गरिष्ठानां विद्याविनोदिविदुषां विद्यानां चतुर्दशसंख्यानां विनोदः पठनपाठनाभ्यासः स एषामस्तीति विद्याविनोदिनस्ते च ते विद्वांसश्च विद्याविनोदिविद्वांसस्तेषां विद्याविनोदिविदुषां मुखाग्रे जिह्वाग्रे एकाङ्गत्वान्मुखशब्दस्य अर्थात् जिह्वैव गृह्यते तत्र निहिताः स्थापिताः सन्तः अज्ञानमात्रतिमिरं अल्पमज्ञानं संशयादिरूपं अज्ञानमात्रं अल्पसंख्याया मात्रं च स्तोकमात्रं यत्तिमिरमन्धकारं तत् अज्ञानमात्रतिमिरं निघ्नन्ति नितरां

घ्नन्ति विनाशयन्ति स्फेटयन्ति दूरीकुर्वन्तीत्यर्थः । तव वाग्विलासाः के इव ? सहस्ररश्मेः सूर्यस्य तिग्मकिरणा इव तिग्मास्तीक्ष्णाः किरणास्तिग्मकिरणाः तुङ्गोदयाद्रिशिरसि निहिताः तिमिरं निघ्नन्ति तुङ्ग उन्नतो योऽसौ उदयाद्रिस्तुङ्गोदयाद्रिस्तस्य तुङ्गोदयाद्रेः शिरः शृङ्गं तुङ्गोदयाद्रिशिरस्तस्मिन् तुङ्गोदयाद्रिशिरसि, यथा उच्चैरुदयाचलमस्तके स्थिता रविरश्मयः सकलविश्वव्यापि तमः स्फेटयन्ति तद्वत् ॥ २९ ॥

पृथ्वीतलं द्वयमपायि पवित्रयित्वा, शुभ्रं यशो धवलयत्यधुनोर्ध्वलोकम्।
प्राग्लङ्घयत्सुमुखि ते यदिदं महिम्ना–मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ॥ ३० ॥

टीका—हे सुमुखि ! सुष्ठु शोभनं मुखं यस्याः सा सुमुखी तत्संबोधने हे सुमुखि यदिदं ते तव शुभ्रमुज्ज्वलं यशः अधुना साम्प्रतं ऊर्ध्वलोकं धवलयति स्वर्गलोकं निर्मलयति देवलोकं व्याप्नोति । किं कृत्वा ? प्राक् पूर्वं द्वयं पृथ्वीतलं नागलोकं मर्त्यलोकं च पवित्रयित्वा पावनं कृत्वा । किंविशिष्टं पृथ्वीतलं ? अपायि जन्ममृत्युरूपौ अपायौ अस्यास्तीत्यपायि सकलुषं मलिनं पवित्रयित्वा विमलीकृत्य । तव यशः किं कुर्वत् ? महिम्नां प्रभावानामुच्चैराधिक्येन सुरगिरेः सुमेरोस्तटं तदधित्यकां लङ्घयदतिक्रामत् "अधित्यकोर्ध्वभूमिः" इति हैमः । उत्प्रेक्षते–तव यशः किं कुर्वदिव ? महिम्नामुच्चैरतिशयेन शातकौम्भं स्वर्णमयं सुमेरोस्तटं लङ्घयदिव । "जाम्बूनदं शातकुम्भं स्वर्णं हेम च हाटकं" इति कोषः । अथवा त्वद्यशः किमिव ? शातकौम्भमिव तीर्थकृज्जन्मस्नपनकलशमिव । अथवा कामकुम्भमिव कामितदायकं । अत्र कुम्भकलशशब्दौ पुंनपुंसकलिङ्गौ । शातकौम्भं पृथ्वीतलं पवित्रीकृत्योर्ध्वलोकं विमलीकुरुते इति भावः ॥ ३० ॥

रोमोर्मिभिर्भुवनमातरिव त्रिवेणी—सङ्गं पवित्रयति लोकमदोऽङ्गवर्ति ।
विभ्राजते भगवति त्रिवलीपथं ते, प्रख्यापयत्रिजगतः परमेश्वरत्वम् ॥ ३१ ॥

टीका—हे भुवनमातः ! हे जगदम्ब भुवनस्य माता इव माता भुवनमाता तत्संबोधनं हे भुवनमातः । यद्यप्यत्र संबोधनस्य प्लुतसंज्ञात्वेन संधेरभावस्तथाप्ययं भुवनमातःशब्दः छान्दसिकः छन्दसि तु भवतीति सन्धेर्न निषेधः ऋचौ(चि) भुवनमातरिति प्रयोगदर्शनात् हे जगन्मातः । हे भगवति ! भगो ज्ञानमस्या अस्तीति भगवती तत्संबोधनं हे भगवति हे ज्ञानवति ते तव त्रिवलीपथं त्रिवलीमार्गं उदरं "त्रिवली तूदरे रेखा" इति कोषः । त्रिवलीनां उदररेखात्रयीणां पन्थाः त्रिवलीपथं तवोदरं रेखात्रययुक्तमित्यर्थः । एतत् विभ्राजते विशेषेण शोभते । हे भगवति अदः त्वदीयं त्रिवलीपथं लोकं सकलजीवलोकं पवित्रयति पवित्रीकुरुते । सकललोकस्य त्वदुदरान्तर्वर्तित्वाद्भुवनमातः इति विशेष्यपदं युक्तं । त्वदपत्यानि सर्वे सर्वेषां च त्वं मातेति भावः । किंविशिष्टं अदः त्रिवलीपथं ? अङ्गवर्ति अङ्गे वर्तत इत्येवंशीलं अङ्गवर्ति देहसंलग्नमित्यर्थः । कैः लोकं पवित्रयति ? रोमोर्मिभिः सूक्ष्मश्यामकेशकल्लोलैः रोमाण्येव ऊर्मयः कल्लोलास्तै रोमोर्मिभिः । उत्प्रेक्षते—त्रिवलीपथं किमिव ? त्रिवेणीसङ्गमिव गंगायमुनासरस्वतीनां त्रयं एकत्रीभूतं इव तिस्रो वेणीभूता यस्य तीर्थस्य स त्रिवेणी तस्य सङ्गं मिलापं त्रिवलीसङ्गं सकलं विश्वं पवित्रीकुरुते । कैः ? ऊर्मिभिः । त्रिवलीपथं किं कुर्वत् ? त्रिजगतस्त्रिभुवनस्य परमेश्वरत्वं परमेश्वरस्य भावः परमेश्वरत्वं सर्वोत्कृष्टमहत्त्वं प्रख्यापयत् कथयत्

त्रिभुवनजनशरण्यमिति विज्ञापयत् । अथ त्रिवेणीसङ्गमपि किं कुर्वत् ? त्रिजगतः विश्वत्रयस्य परमेश्वरत्वं प्रख्यापयत् प्रदर्शयत् । लोके त्रिवेणी प्रयागतीर्थम् ॥ ३१ ॥

भाष्योक्तियुक्तिगहनानि च निर्मिमीषे, यत्र त्वमेव सति शास्त्रसरोवराणि ।
जानीमहे खलु सुवर्णमयानि वाक्य–पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥ ३२ ॥

टीका—हे सति ! वयमिति जानीमहे । इतिशब्दोऽध्याहार्यः । इतीति किं ? यत्र यस्मिन् प्रस्तावे त्वमेव शास्त्रसरोवराणि निर्मिमीषे रचयसि शास्त्राण्येव सरोवराणि सरांसि शास्त्रसरोवराणि । निर्पूर्वो माङ् धातुः रचनार्थं द्योतयति । निर्मिमीषे अतिशयेन रचनां करोषि । तत्र तस्मिन् प्रस्तावेऽथवा तस्यां रचनायां खलु निश्चितं विबुधाः पण्डिता वाक्यपद्मानि "वाक्यं त्याद्यन्तकं पदं" इति हैमः, वाक्यान्येव पद्मानि कमलानि वाक्यपद्मानि परिकल्पयन्ति रचयन्ति स्थापयन्ति, सकमलान्येव सरांसि चकासतीति भावः। किंविशिष्टानि पद्मानि ? सुवर्णमयानि सुष्ठु शोभना प्रचुरा वर्णा येषु तानि सुवर्णमयानि प्राचुर्येऽर्थे मयट् । कमलपक्षे सुवर्णमयानि हेममयानि, मानसे सरसि हेमकमलरचना योग्या । किंविशिष्टानि शास्त्रसरोवराणि ? भाष्योक्तियुक्तिगहनानि सूत्रसूचनकृद्भाष्यं तस्य उच्यन्ते संज्ञादयः षडपि याभिस्ता उक्तयः योज्यन्ते शब्दा अनेके याभिस्ता युक्तयस्ताभिः भाष्योक्तियुक्तिभिः गहनानि दुरवगाहानि गम्भीरार्थानि भाष्योक्तियुक्तिगहनानि इति ॥ ३२ ॥

वाग्वैभवं विजयते न यथेतरस्या, ब्राह्मि ! प्रकाररचनारुचिरं तथा ते ।
ताडङ्कयोस्तव गभस्तिरतीन्दुभान्वो-स्तादृक्कुतो ग्रहगणस्य विकाशिनोऽपि ॥ ३३ ॥

टीका—हे ब्राह्मि ! ब्रह्मणोऽपत्यं स्त्री ब्राह्मी तत्संबोधनं हे ब्राह्मि ते तव वाग्वैभवं वाचां वाणीनां विभोरिदं वैभवं महत्त्वं यत्तत् वाग्वैभवं यथा विजयते सर्वोत्कृष्टत्वेन प्रवर्तते । विपराभ्यां जेरात् (इत्यनेन चन्द्रिकासूत्रेण) विजयते इति पदं । तथा तत्तुल्यं वाग्वैभवं इतरस्या अन्यस्या न विजयते न सुतरां भासते इत्यर्थः । किंविशिष्टं वाग्वैभवं ? प्रकामरचनारुचिरं प्रकाममत्यर्थं रचनाभिः रुचिरं मनोहरं प्रकामरचनारुचिरं । पुनरपि निश्चयेन हे ब्राह्मि तव ताडङ्कयोः कुण्डलयोः गभस्तिः कान्तिः यादृक् विजयते, विकाशिनः समुदितस्य ग्रहगणस्य नक्षत्रसमूहस्य तादृक् कान्तिर्दीप्तिः कुतः विजयते ? न सुतरां भासते, हीनत्वादित्यर्थः । किंविशिष्टयोः ताडङ्कयोः ? अतीन्दुभान्वोः अतिक्रान्तौ इन्दुभानू चन्द्रसूर्यौ यौ तौ अतीन्दुभानू तयोः अतीन्दुभान्वोः शशिरविभ्यामधिककान्त्योरिति भावः ॥ ३३ ॥

कल्याणि ! सोपनिषदः प्रसभं प्रगृह्य, वेदानतीन्द्रजदरो जलधौ जुगोप ।
भीष्मं विधेरसुरमुग्ररुषाऽपि यस्तं, दृष्ट्वा भयं भवति नो भवदाश्रितानाम् ॥ ३४ ॥

टीका—हे कल्याणि ! कल्याणं भद्रं अस्या अस्तीति कल्याणी तस्याः संबोधनं हे कल्याणि भवदाश्रितानां भवतीमाश्रिता भवदाश्रितास्तेषां त्वदाराधकानां पुंसां कदापि भयं नो भवति । किं कृत्वाऽपि ? तं वक्ष्यमाणमसुरं दैत्यं

दृष्ट्वापि निश्चयेन निरीक्ष्यापि । किंविशिष्टं ( असुरं ) ? भीष्मं भयङ्करं विलोक्य । तं कं ? यो दानवः प्रसभं हठात् बलात्कारेण विधेर्ब्रह्मणः वेदान् प्रगृह्य प्रकर्षेण गृहीत्वा जलधौ समुद्रे जुगोप गोपयामास । किंविशिष्टान् वेदान् ? सोपनिषदः सरहस्यान् । किंविशिष्टो यः ? अतीन्द्रजदरः अवगणितसुरेन्द्रभयः इन्द्राज्जात इन्द्रजः स चासौ दरश्च भयं इन्द्रजदरस्तं अतिक्रान्तः अतीन्द्रजदरः एतादृगसुरोऽपि न पराभवतीत्यर्थः ॥ ३४ ॥

गर्जद्घनाघनसमानतनूगजेन्द्र–विष्कम्भकुम्भपरिरम्भजयाधिरूढः ।
द्वेष्योऽपि भूप्रसरदश्वपदातिसैन्यो, नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३५ ॥

टीका—हे कल्याणि ! द्वेष्योऽपि शत्रुरपि ते तव क्रमयुगाचलसंश्रितं क्रमयुगमेव चरणयुगलमेवाचलः पर्वतस्तं संश्रित आश्रितस्तं क्रमयुगाचलसंश्रितं त्वच्चरणसेविनं नरं न आक्रामति न पीडयति । किंविशिष्टो द्वेष्यः ? गर्जद्घनाघनसमानतनूगजेन्द्रविष्कम्भकुम्भपरिरम्भजयाधिरूढः गर्जन् शब्दायमानो घनाघनो मेघस्तेन समाना तनूः शरीरं यस्यासौ घनाघनसमानतनूः मेघवर्णशरीरः स चासौ गजेन्द्रश्च तस्य विष्कम्भ विस्तीर्णः कुम्भः तं परिरम्भजयाभ्यां आरोहणविजयाभ्यां अधिरूढो यः स गर्जद्घनाघनसमानतनूगजेन्द्रविष्कम्भकुम्भपरिरम्भजयाधिरूढः । पुनः किंविशिष्टो द्वेष्यः ? भूप्रसरदश्वपदातिसैन्यः भुवि पृथिव्यां प्रसरत् योद्धुं समुल्लसदश्वपदातीनां(तेः) सैन्यं कटकं यस्य स भूप्रसरदश्वपदातिसैन्यः प्रबलबलकलित इत्यर्थः । द्विष् अप्रीतौ द्वेष्टीति द्वेष्यः ॥ ३५ ॥

मांसासृगस्थिरसशुक्रसलज्जमज्जा, स्नायूदिते वपुषि पित्तमरुत्कफाद्यैः ।
रोगानलं चपलितावयवं विकारै–स्त्वन्नामकीर्तनजलं शमयत्यशेषम् ॥ ३६ ॥

टीका–हे कल्याणि ! त्वन्नामकीर्तनजलं तव नाम त्वन्नाम, त्वन्नाम्नः कीर्तनं कथनमेकाग्रजपनं तदेव जलं पानीयं यत्तत्त्वन्नामकीर्तनजलं अशेषं समस्तं रोगानलं कष्टकृशानुं शमयति विध्यापयति । कस्मिन् ? वपुषि शरीरे। किंविशिष्टे वपुषि ? मांसासृगस्थिरसशुक्रसलज्जमज्जास्नायूदिते मांसं च, असृग् रुधिरं च, अस्थि च, रसश्च, शुक्रं वीर्यं च, सलज्जश्चासौ मज्जा च सलज्जमज्जा तस्मिन् मज्ज(ज्जायां)निर्लज्जात्वं पित्रङ्गत्वादाप्तं, यतो यस्य पिता कुलीनः तत्पुत्रः सलज्जः स्यात्तस्य चाङ्गे पित्रङ्गानि तिष्ठन्ति । यदुक्तं विवाहप्रज्ञप्त्यां–"तओ पितियंगा पण्णत्ता, तं जहा–अट्ठि अट्ठिमिंजा केसमंसूरोमणहे" इतिपाठात् सलज्जमज्जा इतिपदमुचितं, स्नायुर्नाडी च, मांसासृगस्थिरसशुक्रसलज्जमज्जास्नायवस्ताभिः उदिते उत्पन्ने । तैः सप्तधातुभिः अथवा दशधातुभिः मनुजतनुरुत्पद्यते । ते चोच्यन्ते–"रसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः । सप्तैव दश चैकेषां रोमत्वक्स्नायुभिः सह ॥ १ ॥" इति हैमः । तदुत्पन्ने वपुषि रुग्वैश्वानरं त्वन्नामोदकं उपशमयति । किंविशिष्टं रोगानलं ? पित्तमरुत्कफाद्यैः विकारैश्चपलितावयवं पित्तं च मरुच्च कफश्च पित्तमरुत्कफास्ते आद्या येषु ते पित्तमरुत्कफाद्यास्तैः पित्तमरुत्कफाद्यैः विकारैर्बहुपीडनैः चपलितानि(ताः) चपलभावं प्रापितानि(ताः) अवयवानि (वाः) नाड्युच्छ्वासादीनि यस्य तत् चपलितावयवं । तत्सर्वं शमयतीति भावः ॥ ३६ ॥

मिथ्याप्रवादनिरतं व्यधिकृत्यसूयं, एकान्तपक्षकृतकक्षविलक्षितास्यम् ।
चेतोऽस्तभीः स परिमर्दयते द्विजिह्वं, त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ३७ ॥

टीका—हे कल्याणि ! यस्य पुंसः पुरुषस्य हृदि हृदये त्वन्नामनागदमनी त्वन्नामैव नागदमनी सर्पवश्यकारिका जटी सा च त्वन्नामनागदमनी वर्तते । यत्तदोः संबन्धात् स त्वदाराधकः पुमान् द्विजिह्वं दुर्जनं परिमर्दयते चूर्णयति स्वायत्तीकरोति वा । किंविशिष्टः सः ? चेतोऽस्तभीः चेतसः चित्तात् अस्ता दूरीभूता भीर्भयं यस्य स चेतोऽस्तभीः निर्भय इत्यर्थः । किंविशिष्टं द्विजिह्वं ? मिथ्याप्रवादनिरतं असत्प्रलापे आसक्तं । पुनः किंविशिष्टं द्विजिह्वं ? व्यधिकृत्यसूयं विशेषेण अधिकृतिः अधिकतां प्राप्ता असूया ईर्ष्या यस्मिन् स व्यधिकृत्यसूयस्तं । पुनः किंविशिष्टं द्विजिह्वं ? एकान्तपक्षकृतकक्षविलक्षितास्यं एकान्तपक्षस्य अद्वैतवादिनः कृतकक्षं कृतोपमानं कृताङ्गीकरणं वा तेन विलक्षमुदासीनं जातमस्येति विलक्षितं आस्यं मुखं यस्य स एकान्तपक्षकृतकक्षविलक्षितास्यः तं। अनेकान्तवादिभिरनेकश एकान्तवादिनो विलक्षीकृता इति तात्पर्यम् ॥ ३७ ॥

प्राचीनकर्मजनितावरणं जगत्सु, मौढ्यं मदाढ्यदृढमुद्रितसान्द्रतन्द्रम् ।
दीपांशुपिष्टमयि सद्मसु देवि पुंसां, त्वत्कीर्तनात्तम इवाशु भिदामुपैति ॥ ३८॥

टीका—हे कल्याणि ! हे देवि ! अयि इति कोमलामन्त्रणे पुंसां त्वदुपासकानां मौढ्यं मूर्खता आशु शीघ्रं भिदां विल-

यमुपैति प्राप्नोति । केषु ? जगत्सु । कस्मात् ? त्वत्कीर्तनात् तव गुणकथनात् । किंविशिष्टं मौढ्यं ? प्राचीनकर्मजनितावरणं प्राग्जन्मनि भवानि उत्पन्नानि प्राचीनानि यानि कर्माणि तैर्जनितमुत्पादितं ज्ञानदर्शनीयावरणादिरूपमावरणं यस्मिंस्तत् प्राचीनकर्मजनितावरणं । पुनः किंविशिष्टं मौढ्यं ? मदाढ्यदृढमुद्रितसान्द्रतन्द्रं मदाढ्यत्वेन गर्वाधिक्येन दृढमुद्रा जाताऽस्येति दृढमुद्रितं सान्द्रं सघनं तन्द्रेति आलस्यं यस्मिंस्तत् मदाढ्यदृढमुद्रितसान्द्रतन्द्रं । अथवा दृढमुद्रा जाताऽस्यामिति दृढमुद्रिता ( सा ) चासौ सान्द्रा सघना तन्द्रा यस्मिंस्तत् तथा । मौढ्यं किमिव ? तम इवान्धकारमिव यथा दीपांशुपिष्टं दीपकिरणचूर्णितं तम आशु शीघ्रं भिदां प्राप्नोति । केषु ? सद्मसु गृहेषु मन्दिरेषु । तद्वत्। दीपस्यांशुभिः किरणैः पिष्टं दीपांशुपिष्टं । पिष संचूर्णने पिष्टमिति रूपम् ॥ ३८ ॥

साहित्यशाब्दिकरसामृतपूरितायां, सत्तर्ककर्कशमहोर्मिमनोरमायाम् ।
पारं निरन्तरमशेषकलन्दिकायां, त्वत्पादपङ्कजवनाश्रयिणो लभन्ते ॥ ३९ ॥

टीका—हे देवि ! निरन्तरं त्वत्पादपङ्कजवनाश्रयिणोऽशेषकलन्दिकायां समस्तविद्यायां पारं लभन्ते प्राप्नुवन्ति । त्वत्पादपङ्कजवनं तव चरणकमलवनं आश्रयन्ते सेवन्ते इतिशीलास्त्वत्पादपङ्कजवनाश्रयिणः । "कलन्दिका सर्वविद्या" इति हैमः । किंविशिष्टायां कलन्दिकायां ? 'साहित्यशाब्दिकरसामृतपूरितायां' साहित्यं छन्दःकाव्यादि, शाब्दिको व्याकरणग्रन्थः, तयोः रसएवामृतं तेन पूरिता भरि(भृ)ता तस्यां साहित्यशाब्दिकरसामृतपूरितायां। पुनः किंविशिष्टायां कलन्दिकायां ? 'सत्तर्ककर्कशमहोर्मिमनोरमायां' सतां पण्डितानां तर्काः प्रमाणादिपदार्थविचारास्त एव कर्कशाः कठोरा

महोर्मयो महाकल्लोलास्तैर्मनोरमा मनोहरा या सा सत्तर्ककर्कशमहोर्मिमनोरमा तस्यां सत्तर्ककर्कशमहोर्मिमनोरमायां तत्पर्यन्तं त्वदाराधका लभन्त इत्यर्थः ॥ ३९ ॥

संस्थैरुपर्युपरि लोकमिलौकसो ज्ञा, व्योम्नो गुरुज्ञकविभिः सह सख्यमुच्चैः ।
अन्योऽन्यमान्यमिति ते यदवैमि मात–स्त्रासं विहाय भवतः स्मरणाद्व्रजन्ति ॥ ४० ॥

टीका–हे मातरहमिति अवैमि जानामि । इतीति किं ? यत् इलौकसो ज्ञा इलायामूर्व्यां भूमौ ओको गृहं येषां ते इलौकसो मनुष्या ज्ञाः पण्डिताः सख्यं मैत्रीभावं व्रजन्ति प्राप्नुवन्ति । कैः सह ? गुरुज्ञकविभिः सह बृहस्पतिबुधभृगुदेवैः सह, त्वदाराधका देवप्रिया भवन्तीति भावः । कस्मात् ? ते तव स्मरणात् ध्यानात् । किंविशिष्टैः ? व्योम्न आकाशस्य उपर्युपरि लोकं देवलोकं उपरि यथाक्रमं संस्थैः स्थितैः । किंविशिष्टस्य व्योम्नः ? भवतः भानि नक्षत्राणि सन्त्यास्मिंस्तत् भवत् तस्य भवतः, नक्षत्रमण्डितस्येत्यर्थः । किंविशिष्टं सख्यं ? उच्चैरतिशयेन अन्योऽन्यमान्यं परस्परपूज्यं । किं कृत्वा ? त्रासं विहाय भयं त्यक्त्वा । मर्त्या अमर्त्यान् अमर्त्याश्च मर्त्यान् अर्थयन्तीति परस्परं प्रीतिरिति ॥ ४० ॥

देवा इयन्त्यजनिमम्ब ! तव प्रसादा–त्प्राप्नोत्यहो प्रकृतिमात्मनि मानवीयाम् ।
व्यक्तं त्वचिन्त्यमहिमा प्रतिभाति तिर्यङ्, मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ॥ ४१ ॥

टीका–हे अम्ब ! व्यक्तं प्रकटं यथा स्यात्तथा तवात्मनि स्वरूपे वाग्देवतारूपेऽचिन्त्यमहिमा प्रतिभाति प्रतिभासते । यद्यस्मात्कारणात् तिर्यङ् मानवीयां प्रकृतिं नरतनूं प्राप्नोति । अहो इत्याश्चर्ये मर्त्या नरा मकरध्वजतुल्यरूपाः काम-

देवसमाकारा भवन्ति । तु पुनः । अहो इत्याश्चर्ये । देवाः सुरा अजानिं अयोनिजन्मत्वं इयन्ति प्राप्नुवन्ति । कस्मात्? तव भवत्याः प्रसादात् जपानुग्रहात् इति ॥ ४१ ॥

ये चानवद्यपदवीं प्रतिपद्य पद्मे, त्वच्छिक्षिता वपुषि वासरतिं लभन्ते ।
नोऽनुग्रहात्तव शिवास्पदमाप्य ते यत्, सद्यः स्वयं विगतबन्धभया भवन्ति ॥ ४२ ॥

टीका—हे पद्मे! हे कमले! च पुनः ये नराः त्वच्छिक्षिताः त्वल्लब्धवरप्रसादा वपुषि शरीरे योनिजन्मनि वासरतिं नो लभन्ते, वसनं वासो गर्भावतारस्तस्मिन् रतिः प्रीतिः वासरतिस्तां वासरतिं न प्राप्नुवन्ति । किंकृत्वा? अनवद्यपदवीं निरवद्यमार्गं प्रतिपद्य संप्राप्य स्याद्वादनयपन्थानमासाद्यापुनरावृत्तिमीहन्ते इति भावः। यद्यस्मात् कारणात् ते त्वत्संमानिताः शिवास्पदं सिद्धिस्थानं आप्य लब्ध्वा स्वयमात्मनैव सद्यस्तत्कालं विगतबन्धभया भवन्ति विशेषेण गतं विलयं प्राप्तं अष्टकर्मणां बन्धस्य भयं येषां ते विगतबन्धभया जन्मजरारहिता जायन्त इति ॥ ४२ ॥

इन्दोः कलेव विमलापि कलङ्कमुक्ता, गङ्गेव पावनकरी नजलाशयापि ।
स्यात्तस्य भारति सहस्रमुखी मनीषा, यस्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥

टीका—हे भारति! भरतस्य भरतक्षेत्रस्याधिष्ठातृत्वाद्भारती । अथवा भरतेन भ्रात्रा चक्रवर्तिना सह जाता युगलप्रसवत्वात् सहोत्पन्ना भारती ब्राह्मी तत्संबोधने हे भारति । यो मतिमान् प्राज्ञ इमं मत्कृतं तावकं तवेदं तावकं स्तोत्रं

अधीते पठति । अधिपूर्व इङ् अध्ययने । तस्य मतिमतः मनीषा बुद्धिः सहस्रमुखी सहस्रं मुखं यस्याः सा, अथवा मुखे सहस्ररूपा एकस्या अनेकार्थरूपा सा सहस्रमुखी स्यात् भवेत् । किंविशिष्टा मनीषा ? पावनकरी पवित्रकारिणी अपि नजलाशया डलयोः सावर्ण्यात् नजडाशया नजडेषु मूर्खेषु आशयोऽभिप्रायो यस्याः सा नजडाशया नञो नक्रादिगणे पठितत्वात् अनादेशो न । मनीषा का इव? गङ्गा इव । किंविशिष्टा गङ्गा? सहस्रमुखी सहस्रधारा अपीति विरोधे जलाशया जलरूपा किं पावनकरी न? अपि तु पावनकरी स्यादेव । जलमाशेते समन्तात्तिष्ठति यत्र सा जलाशया नित्यजला हिमवतोऽवतरिता पवित्रा स्वयं पुनाति च लोकं । पुनः किंविशिष्टा मनीषा? विमला निर्मला अपि निश्चयेन कलङ्कमुक्ता कलङ्करहिता । मनीषा का इव? इन्दोः चन्द्रस्य कलेव सा विमलापि(कलङ्किता) कलङ्कत्वा(वत्वा)त् मनीषायां निष्कलङ्कत्वमधिकं । इन्दोः कलापि सहस्रमुखी सहस्ररश्मीनामुदयत्वात् तुल्यविशेषणानि॥४३॥

योऽहंजयेऽकृत जयोऽगुरुषेऽमकर्ण–पादप्रसादमुदितो गुरुधर्मसिंहः ।
वाग्देवि भूम्नि भवतीभिरभिज्ञसङ्घे, तं मानतुङ्गमवशा समुपैति लक्ष्मीः ॥ ४४ ॥

टीका–हे वाग्देवि! श्रुताधिष्ठातृत्वात् हे श्रुतदेवि! वाचां वाणीनां मध्ये देवी महिमाधिक्येन दीव्यति क्रीडतीति वाग्देवी तत्संबोधने हे वाग्देवि ! भवतीभिर्युष्माभिर्यः गुरुधर्मसिंहः गुरुर्गरिष्ठो यो धर्मो दशविधः क्षान्त्यादिस्तत्र सिंह इव सिंहः प्रबलपौरुषत्वात् पुमान् । भूम्नि बहोर्भावो भूमा तस्मिन् भूम्नि बहुविधे अभिज्ञसंघे अभिज्ञो दक्षो धर्मपरायणो योऽसौ सङ्घश्चतुर्विधः साधुसाध्वीश्रावकश्राविकारूपस्तस्मिन्नभिज्ञसङ्घे । जयो जयतीति जयः जयवान् अकृत चक्रे । ग्रन्थकर्तु-

नामाऽपि गुरुधर्मसिंहः गुरुराचार्यश्चासौ धर्मसिंहश्च धर्मसिंहाभिधानः गुरुधर्मसिंहः, बहूनां धर्मोपदेशकत्वाद्गुरुराचार्यः स्याद्वादनयप्रख्यापनाज्जैनाचार्यः श्रीधर्मसिंहनामाऽहं चतुर्विधसंघसभायां वाग्देवताभिर्जयवान् चक्रे इति कथनाशयेन लब्धवरप्रसाद इति ज्ञापितं । किंविशिष्टेऽभिज्ञसङ्घे ? अहञ्जये अन्येषामेकान्तवादिनां अहमित्यहंकारं जयतीति अहञ्जयस्तस्मिन्नहञ्जये । अहमित्यहंकारार्थेऽव्ययं । मिथ्यात्वं निर्मूलमुन्मूल्य सम्यक्त्वमूलस्वधर्मतत्परे सङ्घे इत्यर्थः । पुनः किंविशिष्टो यः ? तः तु वृद्धौ धातुः त्वदनुग्रहात् तौतीति तः स्वमहिम्ना वृद्धिं प्राप्त इत्यर्थः । किंविशिष्टे सङ्घे ? अगुरुषे अनाचाराः सन्त आत्मानं गुरुत्वमन्यमाना येऽगुरवस्तान् सिनोति वाग्वादैर्बन्धते निरुत्तरीकरोति सः अगरुषः कुगुरुनिषेधकः तस्मिन्नगुरुषे। षिञ् बन्धने सिनोतेर्डः कृदन्तप्रत्ययः(ततः) अगुरुष इति सिद्धं। पुनः किंविशिष्टे सङ्घे ? अमकर्णपादप्रसादमुदि अम् रोगे अमतीति अम् क्विबन्तः अम् रोगः, अकं दुःखं, नकं अकं, अं च अकं च ऋणं च अमकर्णानि, तानि पाति रक्षतीति अमकर्णपं, तच्च तत् अत् च बन्धनं, अति अदि बन्धने क्विबन्तः, अत्शब्दो बन्धनपर्यायार्थः, अमकर्णपात्, तस्य अमकर्णपादः रोगदुःखऋणरूपबन्धनस्याप्रसादः पराभवस्तेन मुद् हर्षो यस्य सोऽमकर्णपादप्रसादमुत् तस्मिन् अमकर्णपादप्रसादमुदि । तव शासनाधिष्ठातुः भवत्या अनुग्रहात् सप्त ईतयः रोगादयः सङ्घे न पराभवन्ति तेन प्रकर्षहर्षयुक्ते इत्यर्थः । अथ च ग्रन्थकर्तुः पक्षे विशेषणे च किंविशिष्टो यो गुरुधर्मसिंहः ? गुरुषेमकर्णपादप्रसादमुदितः स्वयं शिक्षार्पितत्वात् स्वहस्तदीक्षाप्रदानात् स्वपदस्थापितत्वात् गुरुर्महान् गुरुर्मदीयधर्मोपदेष्टा श्रीपूज्यः षेमकर्णाभिधेयः तेषां ( तस्य ) पादप्रसादेन चरणप्रभावेण मुदितो हर्षितः गुरुषेमकर्णपादप्रसादमुदितः श्रीमद्गुरुपादा-

नुग्रहप्रवृद्धहर्ष इत्यर्थः । अत्र षेमकर्णशब्दस्य श्रवणनक्षत्रस्य च चतुर्थपादे जन्मत्वान्मूर्धन्यषकारादिक उचित एवेति निर्णीय लिखितोऽस्ति । अथवा ग्रामनाम्नोः संस्काराभावान्नात्र वितर्कः । हे देवते ! त्वया यो जयवान् चक्रे, यः कः पुरुषोत्तमः तदाह—अवशा निरर्गला लक्ष्मीः तं जयवन्तं पुरुषोत्तमं समुपैति सुतरां भजते प्रीत्याश्रयतीत्यर्थः । किंविशिष्टं तं ? मानतुङ्गं मानेन सन्मानेन गुर्वनुग्रहप्रतिष्ठया त्वत्तो लब्धवरेण च तुङ्गः उच्चैस्तरो महिमाधिको यः स मानतुङ्गः तं मानतुङ्गं सदा साम्राज्यलक्ष्मीः सेवते इति भावः । अथ चतुर्थपादे मानतुङ्गशब्देन प्राचीनभक्तामरस्तोत्रकर्त्रा स्वनाम मानतुङ्गाचार्य इति ज्ञापितं । तच्च सर्वमवसेयमिति ॥ ४४ ॥

॥ इति श्रीचतुर्थपादसमस्यापूरितभक्तामरस्तोत्रवृत्तिः स्वोपज्ञा समाप्ता । ग्रन्थकर्त्रा स्वयमेव निर्मिता स्वोपज्ञीनाम्नीति ॥

## इति श्रीसरस्वतीभक्तामरस्तोत्रम् संपूर्णम्



# । अथ वाक्यप्रकाशः ।

। सवृत्तिः ।

॥ श्रीगौतमस्वामिने नमः ॥

श्रीमज्जिनेन्द्रमानम्य, श्रीगुरूणां प्रसादतः । बालानां बुद्धिबोधार्थ-मौक्तिकं विवृणोम्यहम् ॥

तत्रायमाद्यः श्लोकः—

प्रणम्यात्मविदं विद्या-गुरुं श्रीदेववर्धनम् । मुग्धबुद्धिप्रबोधार्थ-मुक्तियुक्तिः प्रतन्यते ॥ १ ॥

व्याख्या—स्पष्टः ॥ १ ॥

द्विधोक्तिः प्रध्वरा वक्रा, प्रध्वरा कर्तरि स्मृता । वक्रा कर्मणि भावे च, धातोः साप्यादनाप्यतः ॥२॥

व्याख्या—द्विधा उक्तिः । प्रध्वरा उक्तिः कर्तरि भवति । वक्रा द्विधोक्तिः—कर्मण्येका १, द्वितीया भावे २ । साप्यात्सकर्मकात् धातोर्वक्रा उक्तिः कर्मणि भवति, अनाप्यतोऽकर्मकाद्धातोर्वक्रा उक्तिर्भावे स्यात् ॥ २ ॥

**कर्तरि प्रथमा तत्र, प्रध्वरोक्तौ क्रिया पुनः । कर्त्रपेक्षार्थवचना, धात्वपेक्षपदद्वया ॥ ३ ॥**

व्याख्या—प्रध्वरायामुक्तौ कर्तरि प्रथमा स्यात् । क्रिया कीदृशीत्याह—कर्तुरपेक्षयाऽर्थोऽन्यदर्थादिकः वचनं च एकवचनादिकं यस्यां क्रियायां सा कर्त्रपेक्षार्थवचना अन्यदर्थो युष्मदर्थोऽस्मदर्थश्च कर्तुरपेक्षया, एकवचनं द्विवचनं बहुवचनं च कर्त्रपेक्षया भवतीत्यर्थः । पुनः कीदृशी ? धातोरपेक्षया पदद्वयं परस्मैपदात्मनेपदरूपं यत्र सा तथा । धातुश्चेत्परस्मैपदी तदा परस्मैपदं, धातुश्चेदात्मनेपदी तदात्मनेपदं, धातुश्चेदुभयपदी तदा फलवत्कर्त्रपेक्षयात्मनेपदं अन्यथा परस्मैपदमित्यनुक्तमपि ज्ञेयमिति ॥ ३ ॥

**कर्मोक्तौ प्रथमा कर्म–ण्युक्तत्वात् प्रत्ययादिभिः । तृतीया कर्तरि त्यादि–प्रत्ययाद्यं तु कर्मजम् ॥ ४ ॥**

व्याख्या—कर्मोक्तौ कर्मणि प्रथमा भवति । ननु कर्मणि द्वितीया प्राप्नोति ततः प्रथमा कस्माद्भवति ? उच्यते—प्रत्ययादिभिरुक्तत्वात् । अयमर्थः—(यत्र) कृत्प्रत्ययैस्तद्धितप्रत्ययैस्त्यादिविभक्त्या च यत्कारकं प्रोक्तं तत्र प्रथमैव स्यात्, यथा क्रियते कटश्चैत्रेण । अत्र कट इति कर्म, तत्र द्वितीया प्राप्नोति, परं क्रियते इत्यत्र क्यप्रत्ययेन कर्मार्थस्योक्तत्वात् 'उक्तार्थानामप्रयोग' इति न्यायात् उक्तार्थे प्रथमेति वचनात्कर्मणि प्रथमा स्यादिति । एवं कर्तरि तृतीया। 'त्यादिप्रत्य-

याद्यं तु कर्मजं' त्यादिकं कर्मोक्तौ कर्मजं भवति । तिवादिप्रत्ययाः कर्मोक्तौ कर्मापेक्षया भवन्तीत्यर्थः । यथा कट इत्यस्यापेक्षया क्रियते इत्यत्रार्थवचनादिकमिति ॥ ४ ॥

**कालेऽतीते प्राकृतोक्तौ, न भेदः कर्तृकर्मणोः । यथा जिनोऽवदद्धर्मं, धर्मोऽवादि जिनेन वा ॥ ५ ॥**

व्याख्या–प्राकृतोक्तौ कालेऽतीते कर्तृकर्मणोर्भेदो न स्यात् । यथा–जिनोऽवदद्धर्मं, धर्मोऽवादि जिनेन वा । अत्र "वीतरागे धर्म कह्यो" इत्युदाहरणद्वयेऽपि समानमेव प्राकृतजनानां वचः । इदं च देशविशेषे जनभाषामाश्रित्योक्तं । अन्यथा क्वचिद्देशे वाक्यद्वयेऽपि भाषाभेदो दृश्यते । यथा–जिनोऽवदद्धर्ममित्यत्र "वीतराग धर्म बोलतो हुवो" इति वदन्ति । धर्मोऽवादि जिनेन (इत्यत्र तु) "वीतरागे धर्म बोलिओ" इतिभेदोऽपि दृश्यते ॥ ५ ॥

**तृतीयान्तो भवेत्कर्ता, भावोक्तौ कर्म नो भवेत् । अन्यार्थस्याद्यवचनं, क्रियायामात्मनेपदम् ॥ ६ ॥**

व्याख्या—भावोक्तौ कर्ता तृतीयान्तः स्यात् , कर्म च न स्यात् । क्रियायां अन्यदर्थस्यात्मनेपदसंबन्धि एकवचनमेव भवति, भावस्यैकत्वादित्यर्थः ॥ ६ ॥

**सुकृतं सुखानि सूते, ददाति दुःखानि मेदुरं दुरितम् । पाल्यन्ते पुण्यवता, पीड्यन्ते प्राणिनः पापैः॥७॥**

व्याख्या—अत्र पूर्वार्धे कर्तर्युक्तौ उदाहरणद्वयं । उत्तरार्धे कर्मोक्तौ निदर्शनद्वयं ज्ञेयं ॥ ७ ॥

**तैः स्थीयते सुखं यैर्न भूयते रोषरागरतचित्तैः । उक्तिप्रयोग एवं, क्रमेण कर्त्राप्यभावेषु ॥ ८ ॥**

व्याख्या—अत्र पूर्वार्धे भावोक्तौ दृष्टान्तद्वयं। एवं कर्तरि कर्मणि भावे चेति त्रिधोक्तिः ॥ ८ ॥

**यत्र कर्मैव कर्तृत्वं, याति कर्ता तु नोच्यते। ञिक्यात्मनेपदं धातो–रुक्तिः सा कर्मकर्तरि ॥ ९ ॥**

व्याख्या—यत्रोक्तौ कर्ता नोच्यते किं तु कर्मैव कर्तृत्वं याति, धातोश्च ञिक्यात्मनेपदं स्यात्, ञिश्च क्यश्च आत्मनेपदं च समाहारद्वन्द्वे रूपं, ञिक्यात्मनेपदानि धातोर्भवन्तीत्यर्थः। सा कर्मकर्तरि उक्तिर्ज्ञेया ॥ ९ ॥

**सुखैँ भणाइए ग्रंथ, ग्रन्थो भण्यते सुखम्। आफणी कण वीकाइं, विक्रीयन्ते कणाः स्वयम् ॥ १० ॥**

व्याख्या—उदाहरणान्याह—भण्यते विक्रीयन्ते इति क्यप्रत्ययस्योदाहरणद्वयं। ग्रन्थोऽयं भण्यते सुखं, अत्र वाक्यं यथा—ग्रन्थं भणति कश्चित्। स एवं विवक्षति—नाऽहं भणामि, किं तु भण्यते ग्रन्थः स्वयमेव। अत्र एक धाताविति ( एकधातौ कर्मक्रिययैकाकर्मक्रिये ३-४-८६ ) क्यप्रत्ययः। कर्मकर्तर्युक्तौ कर्मणः सौकर्यं प्रतीयते। एवंविधः सुकरः प्रसन्नः सुकुमारो ग्रन्थः, यः स्वयमेव भण्यते ग्रन्थं भणतीति वाक्ये यत्कर्म तदेव ग्रन्थो भण्यते इत्यत्रकर्ता। एवं सर्वोदाहरणेष्वपि ज्ञेयमिति ॥ १० ॥

---

१ भावे चैत्रेण भूयते, भावस्यासत्त्वरूपत्वेन संख्याद्यभावात् द्विवचनबहुवचने न भवतः। एकवचनं तु न द्व्यादिप्रतिपक्षैकत्वसंख्यानिबन्धनं, किंत्वभेदैकत्वनिबन्धनं, " एकवचनमुत्सर्गतः करिष्यत " इति भाष्यं। अत एव युष्मदस्मत्कर्तृत्वेऽपि द्वितीयतृतीयत्रिके न भवतः, त्वया भूयते, मया भूयते इति धातुपारायणे ॥

भगवन् तुम्हि वंदाओ, आफणी आपणे गुणे । भगवन्तः स्वयं यूयं, वन्द्यध्वे निजकैर्गुणैः ॥ ११ ॥

व्याख्या—पूर्वार्धे प्राकृतवाक्यं, उत्तरार्धे तु संस्कृतं। वन्द्यध्वे इत्यत्र एकधाता (वितिसूत्रेणात्मनेपदं) क्यप्रत्ययः ॥११॥

आफणी अम्हि पूजाउं, स्वयं पूज्यामहे वयम् । पचाणु आफणी कूर, अपाचि स्वयमोदनः ॥ १२ ॥

व्याख्या—पूज्यामहे इत्यत्रापि आत्मनेपदम् । इदमुदाहरणद्वयमात्मनेपदस्य । अपाचि अत्र ञिच् 'पचिदुहे'त्यनेन (३–४–८७) सूत्रेण ॥ १२ ॥

मंडाइ आफणी कन्या, कन्याऽलङ्कुरुते स्वयम् । रचाइ आफणी ग्रन्थ, ग्रन्थोऽयं ग्रथते स्वयम् ॥ १३ ॥

व्याख्या—केवलमात्मनेपदोदाहरणमत्रानुक्तमपि लिख्यते । यथा—मंडाइ प्राकृतवाक्यकथनपूर्वकं संस्कृतवाक्यं, अलंकुरुते कन्या स्वयमेव, ग्रन्थः स्वयमेव ग्रथते । अत्रैकधाताविति सूत्रेणात्मनेपदं । अत्र भूषार्थसन्किरादिभ्यश्च ञिक्यौ ( ३-४-९३ ) इति ञिक्यौ न भवतः ॥ १३ ॥

यत्र स्वस्य प्रसिद्धस्य, क्रियया ज्ञाप्यते क्रिया । परेषामप्रसिद्धानां, सोक्तिः स्याद्भावलक्षणा ॥ १४ ॥

व्याख्या—यत्र स्वस्य प्रसिद्धस्य क्रियया परेषामप्रसिद्धानां क्रिया ज्ञाप्यते सा भावलक्षणोक्तिः ॥ १४ ॥

कर्तरि कर्मणि भावे, त्रिविधं तद्भावलक्षणं तत्र। साप्यानाप्यकधातु–प्रयोगतःकर्तरि द्विविधम् ॥१५॥

व्याख्या—भावलक्षणोक्तिस्त्रिविधा कर्तरि कर्मणि भावे च । तत्र कर्तरि द्विधा—सकर्मकधातुप्रयोगात् अकर्मकधातुप्रयोगाच्च ॥ १५ ॥

अमुकइ अमुकउ करतइ, अमुकइ होतइ इति प्रयोगि यथा ।
सूर्येऽभ्युदयं गच्छति, कजेषु विकसत्सु रात्रिरगात् ॥ १६ ॥

व्याख्या—अमुकइं अमुकउं करतइं सकर्मकधातुप्रयोगे भावलक्षणोक्तिलक्षणं, अमुकइं होतइं इदमकर्मकधातुप्रयोगे भावलक्षणं । क्रमेणोदाहरणद्वयमाह—सूर्येऽभ्युदयं गच्छति रात्रिरगात् । अभ्युदयं गच्छतीति सकर्मकधातुप्रयोगः । कजेषु विकसत्सु इत्यकर्मकधातुप्रयोगः ॥ १६ ॥

अथ बालबोधार्थं सकर्मकधातुप्रयोगे बहून्युदाहरणान्याह—

याते शत्रुञ्जयं तीर्थं, नतवत्यादिमं जिनम् । प्रणेमुषि गुरून् भक्त्या, चक्राणे विनयक्रियाम् ॥ १७ ॥
कुर्वति प्राणिषु कृपां, तन्वाने शासनोन्नतिम् । पात्राय दायके श्रीणां, शीलरत्नस्य धर्तरि ॥ १८ ॥
शुश्रूषति च सिद्धान्तं, जिघांसावान्तरानरीन् । प्राप्तुकामे परानन्दं, त्वयि मित्र मुदो मम ॥ १९ ॥

व्याख्या—श्लोकत्रयं स्पष्टं । नवरं दायके श्रीणामिति कर्मणि षष्ठी । शीलरत्नस्येत्यत्रापि ( तथा )। आन्तरान् अन्तरङ्गान् अरीन् जिघांसौ हन्तुमिच्छौ मम मुदो हर्षा वर्तन्ते । इति कर्तरि भावलक्षणम् ॥ १७–१८–१९ ॥

**अमुकइं इसइं करीतइं होईं तइं कर्मभावयोश्च यथा । रविणा क्रियमाणेऽहन्युदीयमाने च याति तमः ॥२०॥**

व्याख्या—अमुकइं इसइं करीतइं इतिवाक्ये कर्मणि भावलक्षणं सकर्मकधातुप्रयोगतः । यथा–रविणाऽहनि क्रियमाणे तमो याति । अमुकइं होईं तइं इत्यकर्मकधातु प्रयोगात् भावे भावलक्षणं, यथा—रविणा उदीयमाने याति तमः । इति कर्मणि भावे च भावलक्षणभेदद्वयम् ॥ २० ॥

एवं चात्राप्युदाहरणवाहुल्यं वालवोधकृते वक्ति—

**मया गृहीते चारित्रे, क्रियमाणे तपोभरे । जिनागमे च पेठाने, मित्र ते मोदते मनः ॥२१॥**

व्याख्या—स्पष्टः । नवरं मित्र ते इत्यत्र असदिवामन्त्र्यमिति संबोधनपदस्याग्रे ते इत्यादेशो न स्यात्, परं ते मे इत्यव्यये स्त इत्यदोषः । इति कर्मणि भावलक्षणम् ॥ २१ ॥

**नृत्ते सुरीभिर्गन्धर्वै–र्गीयमाने श्रवःसुखम् । जिनेनासनि तस्थाने, प्रमोदः पर्षदोऽभवत् (पर्षदो भवेत्)२२**

व्याख्या—सुरीभिर्नृत्ते, गन्धर्वैर्गीयमाने, जिनेनासनि तस्थाने सति जिनेनासनेऽधिष्ठिते सतीत्यर्थः । प्रमोदः पर्षदोऽभवत् । तस्थाने इति कानप्रत्यये तस्य परोक्षावद्भावे द्वित्वे च सिद्धं । इति भावे भावलक्षणम् ॥ २२ ॥

**सर्वस्मिन् कारकेऽनुक्ते, यथार्हं सूत्रभाषिताः । विभक्तयो द्वितीयाद्या, उक्ते तु प्रथमा भवेत् ॥ २३ ॥**

व्याख्या—सर्वस्मिन्नप्यनुक्ते कारके यथायोगं सूत्रभाषितानुसारेण द्वितीयाद्या विभक्तयो भवन्ति । प्रत्ययादिभिरुक्ते कारके प्रथमैव स्यात् ॥ २३ ॥

**उक्तं कृत्तद्धितत्यादि-समासैः कारकादिकम् । तद्विभक्त्यप्रयोगत्वात्, प्रथमा नाममात्रतः ॥ २४ ॥**

व्याख्या—कृत्प्रत्ययैस्तद्धितप्रत्ययैस्त्यादिभिः समासैश्च कारकाद्यर्थे प्रोक्ते, आदिशब्दात्संबन्धार्थे चोक्ते। तत्र नाममात्रत्वेन नाम्नः प्रथमैकद्विबहाविति ( २-२-३१ ) प्रथमा स्यात् ॥ २४ ॥

षट्सु कारकेषु संबन्धे च उक्ते प्रथमां दर्शयति—

**जिनो जयति जैनेन क्रियते प्राणिनां दया । स्नानीयं स्नात्यनेनेति, दानीयोऽस्मै तु दीयते ॥ २५ ॥**
**बिभेत्यस्मादसौ भीम-स्त्वस्मिन्नास्यत आसनम् । गोमान् सन्त्यस्य गावो हि, ज्ञेयान्युक्तान्यमून्यहो २६**

व्याख्या—जिन इत्यत्र कर्तरि तृतीया प्राप्नोति, परं जयतीत्यत्र शव्प्रत्ययेन कर्तृकारकस्योक्तत्वात्तत्र प्रथमा कृता । जैनेन दया क्रियते, दया इत्यत्र कर्मणि द्वितीया प्राप्नोति, परं क्रियते इत्यत्र क्यप्रत्ययेन कर्मकारकस्योक्तत्वात् नाम्न इति प्रथमैव इत्याख्यातोक्तं । स्नानीयं चूर्णं, स्नात्यनेनेति करणे चूर्णशब्दात्तृतीया प्राप्नोति, परं तव्यानीयौ (५-१-२७) इति सूत्रप्राप्तेनानीयप्रत्ययेन करणार्थस्योक्तत्वात् उक्ते तु प्रथमा भवेदितिवचनात्प्रथमैव । एवमग्रेऽपि दानीयो द्विजः, दीयतेऽस्मै इति दानीयः, अत्र द्विजशब्दात् संप्रदाने चतुर्थी प्राप्नोति, परं संप्रदानार्थस्यानीयप्रत्ययेनोक्तत्वात्प्रथमा ।

भीमः सिंहः, बिभेत्यस्माज्जन इति "भीमादयोऽपादाने" ( ५-१-१४ ) इतिसूत्रेणापादाने निपातितत्वात् उक्तार्थत्वादपादानस्य सिंहशब्दात्प्रथमैव । आसनं स्थानं, आस्यतेऽस्मिन्निति 'करणाधारे'( ५- ३-१२९ ) आधारस्यानट्प्रत्ययेनोक्तत्वात् स्थानशब्दात्प्रथमा, इति कृदन्तोक्तं । गोमान्, गावः सन्त्यस्य गोमान् मतुप्रत्ययसंबन्धस्योक्तत्वाच्चैत्रशब्दात्प्रथमा इति तद्धितोक्तं । वीतो रागो यस्मात्स वीतरागो जिनः, अत्र जिनशब्दात्पञ्चमी प्राप्नोति, परं समासेनापादानार्थस्योक्तत्वाज्जिनशब्दात्प्रथमैव, इति समासोक्तं । उक्ते तु प्रथमा भवेदिति सर्वकारकेषु भावितं । इत्युक्तिभेदाः ॥२५–२६॥

अथ कियन्तः प्रत्ययाः ( दर्श्यन्ते )—

**शत्रानश्शानातृश्क्वसुकानक्तवतुणकतृचस्तृन् च । कर्तर्येते क्तोऽपि च, गत्यर्थाकर्मकादिभ्यः ॥ २७॥**

व्याख्या—'शतृ आनश् शान अतृश् क्वसु कान क्तवतु णक तृच् तृन्' कर्तरि एते प्रत्यया भवन्ति । क्तप्रत्ययोऽपि गत्यर्थेभ्योऽकर्मकेभ्यश्च । आदिशब्दात् पिबभुजधातोरारम्भार्थेभ्यश्च धातुभ्यः कर्तरि क्तप्रत्ययः स्यात् ॥ २७ ॥

**कर्मणि साप्याद्धातोरकर्मकादात्मनेपदं भावे । कृत्यक्तखलर्थयुतं, क्त्वातुमम़ाद्याः पुनर्भावे ॥ २८ ॥**

व्याख्या—सकर्मकाद्धातोः कर्मणि अकर्मकाद्भावे आत्मनेपदं कृत्याः क्तखलर्थप्रत्ययाश्च भवन्ति । कर्मणि भावे चैतेऽपि प्रत्यया भवन्तीति भावः। घ्यण् तव्य अनीय क्यप् एते पञ्च प्रत्ययाः कृत्यसंज्ञा ज्ञेयाः । क्त्वा तुम् अम् एते भावे धात्वर्थमात्रे भवन्ति ॥ २८ ॥

एषां प्रयोगो यथा—

करतु भणतु एवं, तकारो यत्र दृश्यते। तत्र शत्रानशौ ज्ञेयौ, तुल्यकालक्रियाग्रतः ॥ २९ ॥

व्याख्या—समानकालायाः क्रियायाः पुरतः ॥ २९ ॥

तत्कर्तरि विभक्तिर्या, लिङ्गं यद्वचनं च यत्। विभक्तिलिङ्गवचना—न्येतान्येव तयोः पुरः ॥ ३० ॥

व्याख्या—कर्तरि या विभक्तिर्यल्लिङ्गं यद्वचनं, तान्येव विभक्तिलिङ्गवचनानि शत्रानशोः पुरो भवन्ति ॥ ३० ॥

यथा भक्तिर्गुरोः कुर्वन्, शिष्यो दक्षोऽत्र जायते। कुर्वाणान् विनयं शिष्यान्, पाठयेद्गुरुरादरात् ॥३१॥

व्याख्या—स्पष्टः ॥ ३१ ॥

शिष्याः पठन्तः सिद्धान्तं, भवन्ति भुवि विश्रुताः। शिष्यान् विद्यामधीयानान्, शृण्वन्ति गुरवो मुदा ॥३२॥

व्याख्या—अत्र बहुवचनप्रयोगः ॥ ३२ ॥

अनयोर्विशेषं वक्ति—

शत्रानशौ वर्तमाने, सस्यौ चैतौ भविष्यति। कसुकानौ परोक्षावत्, साध्यौ काले परोक्षके ॥३३॥

व्याख्या—एतौ वर्तमानकाले स्तः। सस्यौ स्यप्रत्ययसहितौ भविष्यत्काले स्तः। परोक्षकाले परोक्षावत् क्वसुकानौ भवतः ३३

॥ ६१ ॥

यथा—

शोभते विनयं कुर्वन्, ददानो दानमास्तिकः। दिवं यास्यन् शिवं गास्य–मानो वा संयमं श्रयेत् ॥३४॥

व्याख्या—पूर्वं वर्तमानकालोदाहरणं। यास्यन् गास्यमान इति भविष्यत्कालोदाहरणम् ॥ ३४ ॥

अथ क्वसुकानयोरुदाहरणमा(ण आ)ह—

विनयं चकृवान् भाति, चक्राणो धर्ममार्हतः। पेठानं साधुभिः शास्त्रं, न शया (शिश्या)नं कदापि यैः॥३५॥

व्याख्या—चकृवान् इति क्वसुप्रत्ययान्तः। चक्राण इति कर्तरि कानप्रत्ययः इत्यादि ॥ ३५ ॥

करीतुं दीजतुं एवमादौ यत्रेतईजतौ। यमान इति तत्रानश्, तृतीया चास्य कर्तरि ॥ ३६ ॥

व्याख्या—यत्र ईतुं ईजतुं इत्यादि प्राकृतवचने दृश्यते, संस्कृते च यमान इति, तत्रानश्। अस्य प्रत्ययस्य कर्तरि तृतीया भवति ॥ ३६ ॥

तद्व्याप्ये यद्विभक्त्याद्यं, तदाऽऽनश्यपि तद्यथा। विनयः क्रियमाणोऽस्ति, दीयमाने धने बुधैः ॥ ३७ ॥

व्याख्या—आनशः कर्मणि यद्विभक्त्यादिकं, आदिशब्दात् यल्लिङ्गं तत् आनश्प्रत्ययादपि पुरतः स्यात्। यथा बुधैः विनयः क्रियमाणः, दीयमाने धने इति ॥ ३७ ॥

शानातृशौ वर्तमाने, श्रृण्वानोऽर्थमघं द्विषन्। तीते क्तक्तवतू तीर्थं, गतः पूजितवान् जिनम् ॥ ३८ ॥

व्याख्या—शान अतृश् इत्येतौ वर्तमानकाले । यथा "वयःशक्तिशीले" (५-२-२४) इति शानप्रत्यये श्रृण्वान इति ।" सुग्द्विषार्हः सत्रिशत्रुस्तुत्ये" (५-२-२६) इतिसूत्रेण अतृश्प्रत्यये द्विषन् इति रूपं । अनयोः कर्मणि षष्ठी न भवति, निषेधात् । अतीतकाले क्तक्तवतू प्रत्ययौ भवतः । तीतशब्दोऽप्यतीतेऽर्थेऽस्ति । उदाहरणद्वयं कण्ठ्यम् ॥ ३८ ॥

**देणहारलेणहारे-त्यर्थे णकतृचौ तयोः । कर्तरीव विभक्त्याद्यं, षष्ठी त्वाप्ये तदीयके ॥ ३९ ॥**

व्याख्या—यथा कर्तरि विभक्त्यादिकं तथा अत्रापि, णकतृचोः कर्मणि षष्ठी स्यात् ॥ ३९ ॥

यथा—

**ज्ञानस्य दायकाः श्रीणां, दातारः सन्ति सज्जनाः । लायकान् परदोषाणां, धिग् लातृंश्च परश्रियाम् ॥ ४० ॥**

व्याख्या—स्पष्टः । णकतृचाविति (५-१-४८) सूत्रेण, तेषां कर्तरि विकल्पेन षष्ठी (द्विहेतोरिति सूत्रेण) ॥ ४० ॥

अथ कृत्यादयः—

**करिवुं रहिवुं देवुं, इत्यादौ कृत्यप्रत्ययाः । कार्यं स्थानीयमेतव्यं, देयं कृत्यं तव त्वया ॥ ४१ ॥**

व्याख्या—अत्र पञ्चापि कृत्यप्रत्यया उदाहृताः । "कृत्यस्य वा' (२-२-८८) इतिसूत्रेण तेषां कर्तरि विकल्पेन षष्ठी । पञ्चानामपि सूत्राणि—ऋवर्णव्यञ्जना(न्ता)द् घ्यण् (५-१-१७) १ तव्यानीयौ (५-१-२७) २ य एच्चातः (५-१-२८) ३ नाम्नो वदः क्यप् च (५-१-३५) ४ इत्यादीनि ॥ ४१ ॥

**दयाधर्मः श्रितो यैस्तै–र्जातुचिन्न स्थितं वधे । सुज्ञानं सुकरं तत्त्वं, तैर्यैरीषल्लभं शुभम् ॥ ४२ ॥**

व्याख्या—श्रित इति सकर्मकाद्धातोः कर्मणि क्तप्रत्ययः । स्थितमिति भावे क्तः । सुखेन ज्ञायत इति सुज्ञानं । " शासुयुधिदृशिधृषिमृषातोऽनः " ( ५-३-१४१ ) इतिसूत्रेण खलर्थोऽनप्रत्ययः । सुखेन क्रियत इति सुकरं । " दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात् खल् " ( ५-३-१३९ ) इति खल् । ईषत् अनायासेन लभ्यत इति ईषल्लभं । शुभं भवता " दुःस्वीषत " इति खल् ॥ ४२ ॥

अथ क्त्वादयः—

**करीले इत्यादिवाक्ये–ष्वीकारो यत्र जल्प्यते । तत्र पूर्वक्रियायां क्त्वा, द्वितीया चास्य कर्मणि ॥४३॥**

व्याख्या—पूर्वकाले क्त्वा । अस्य कर्मणि द्वितीया । ननु " क्त्वातुमम् भावे " ( ५-१-१३ ) इतिसूत्रेण क्त्वा तुम् अम् एते प्रत्यया भावे विधीयन्ते, तत्र च कर्म न स्यादिति कथमुक्तं कर्मणि द्वितीयेति ? उच्यते— " सकर्मकाणामुत्पन्नस्त्यादिर्भावविवक्षया । अपाकरोति कर्मार्थं, स्वभावान्न पुनः कृतः॥१॥" कृत्प्रत्ययाः स्वभावादे(द)कर्मकाद्धातोरुत्पन्नाः सन्तः कर्मार्थं वा नापाकुर्वन्तीत्यस्यार्थः ॥ ४३ ॥

**स्नात्र करी जिन पूजइं, स्नात्रं कृत्वा जिनं स पूजयति । धन लेई घरि पइसइ, धनानि लात्वा गृहं विशति**

व्याख्या—स्पष्टा. ॥ ४४ ॥

करिवाभणिवेत्यादौ, यत्र वाकार उच्यते । तत्रोत्तरक्रियाग्रे तुम्, तद्व्याप्ये च द्वितीयिका ॥ ४५ ॥

व्याख्या—उत्तरकाले तुम् । तत्कर्मणि द्वितीया ॥ ४५ ॥

यथा—

घर करिवा धन मागइ,गृहाणि कर्तुं धनानि मार्गयति। थुइ भणिवा गुरु सेवइ,स्तुतिमध्येतुं गुरून् भजति

व्याख्या—स्पष्टा ॥ ४६ ॥

अस्य विशेषमाह—

ईकारे सत्यपि ज्ञा शक्, धात्वर्थौ यत्र योज्यते । तुमेव तत्र विज्ञेयो, न तु क्त्वाप्रत्ययो भवेत् ॥४७॥

व्याख्या—स्पष्टः ॥ ४७ ॥

दृष्टान्तमाह—

एउ दान देई जाणइ, अनइ तप करी सकई । दातुमयं वेत्ति दानं, तपः कर्तुं च शक्नुयात् ॥४८॥

व्याख्या—सुगमः ॥ ४८ ॥

पुनः प्रत्ययविशेषमाह—

भाजणुं काठ इत्यादौ, प्रत्ययौ घुरकेलिमौ । भङ्गुरं भिदुरं काष्ठं, केदाराश्च पचेलिमाः ॥ ४९ ॥

व्याख्या—कण्ठ्यं । नवरं व्याप्ये घुरकेलिमकृष्टपच्यं ( ५-१-४ ) इति सूत्रात् सिद्धिः ॥ ४९ ॥

यत्र प्रयोक्तृव्यापारे, वकारो वाक्यमध्यगः । तत्र णिक्प्रत्ययो यद्व—च्छात्रान् भाणयते गुरुः॥५०॥

व्याख्या—भणावइ करावइ इत्यादौ वकारो वाक्यमध्यगतो भवति तत्र णिग् ॥ ५० ॥

करिवा वांछइ भणिवा,हींडइ इत्येवमादिषु स्यात् सन् । साधुश्चिकीर्षति तपः,श्रीसिद्धान्तं च बिभणिषति

व्याख्या—कर्तुमिच्छति चिकीर्षति। भणितुमिच्छति बिभणिषति।"तुमर्हादिच्छायां (सन्नतत्सनः ३-४-२१) इति सन् ५१

भृशादौ कुटिले गर्ह्ये, यङि चेक्रीयितादयः । चेक्रीयते चंक्रम्यते, निजेगिल्यत इत्यपि ॥ ५२ ॥

व्याख्या—एष्वर्थेषु यङि चेक्रीयितादयः प्रयोगा भवन्ति। भृशं पुनः पुनर्वा करोति, "व्यञ्जनादेरेकस्वरा (त् भृशाभीक्ष्ण्ये यङ् वा ३-४-९)दिति" यङि चेक्रीयते। कुटिलं गच्छति, "गत्यर्थात्कुटिले" (३-४-११) इति यङि चंक्रम्यते । गर्हितं निगिरति गृत् निगरणे, "गृलुपसदचर(जपजभदशदहो गर्ह्ये ३-४-१२) " इति यङि नेजेगिल्यते ॥ ५२ ॥

अथ क्रियाप्रयोगः—

शुद्धाऽशुद्धा क्रिया द्वेधा, शुद्धा त्याद्यन्तधातुजा। अशुद्धा कृत्प्रत्ययान्ता, ते तु शत्रानशादयः॥५३॥

व्याख्या—शत्रानशादयः कृत्प्रत्ययाः पूर्वोक्ताः ज्ञेयाः ॥ ५३ ॥

त्रिधा धातुरकर्मा च, द्विकर्मा चैककर्मकः । तत्राकर्मा द्विधा नित्या—कर्माऽविवक्षिताप्यकः ॥ ५४ ॥

व्याख्या— अकर्मा द्विविधः--नित्याकर्मकः अविवक्षितकर्मकश्च ॥ ५४ ॥

**स नित्याकर्मको यस्य, कर्म नैवास्ति मूलतः । लज्जते विद्यते तिष्ठ-त्येष जागर्ति वर्धते ॥ ५५ ॥**

व्याख्या—स्पष्टः ॥ ५५ ॥

नित्याकर्मकधातूनाह—

**लज्जासत्तास्थितिजागरणं,वृद्धिक्षयभयजीवितमरणम्।शयनक्रीडारुचिदीप्यर्था, धातुगणं तमकर्मकमाहुः**

व्याख्या—एतदर्था धातवो ग्राह्याः । कोऽर्थः ? लज्जार्थे वर्तमाना धातवो लज्जाशब्देन ग्राह्याः । सत्तार्थे वर्तमानाः सत्ता । एवमग्रेऽपि । ततो लज्जा च सत्ता च स्थितिश्च जागरणं च समाहारद्वन्द्वे रूपं । एतदर्था धातवोऽकर्मका इत्यर्थः । एवं द्वितीयपदेऽपि ॥ ५६ ॥

**विवक्षितं न यत्कर्म, सोऽविवक्षितकर्मकः । यथा करोत्यधीतेऽसौ, क्रियतेऽधीयतेऽमुना ॥ ५७ ॥**

व्याख्या—स्पष्टः ॥ ५७ ॥

**उपसर्गाद्विपर्यस्येत्, सकर्माऽकर्मता क्वचित् । यथोद्गच्छति मार्तण्डः, पराभवति तामसान् ॥ ५८ ॥**

व्याख्या—उपसर्गेण क्वचित्सकर्माऽप्यकर्मा स्यात् ।यथा उद्गच्छति मार्तण्डः,अत्र गम् धातुः सकर्मकोऽप्युपसर्गयोगादकर्मकः। उपसर्गयोगात् क्वचिदकर्माऽपि सकर्मा स्यात्,यथा रविस्तामसान् पराभवति,भूधातुरकर्माऽप्यत्रोपसर्गबलात्सकर्मकः

सकमार्कसर्कधातुप्रयोगो यथा—

**सोपसर्गोऽन्यार्थे वृत्ति–रन्तर्भूतः क्रियान्तरः । णिगन्तोऽन्तर्णिगर्थो वा, पञ्चोपायैः सकर्मकः ॥ ५९ ॥**

व्याख्या—सोपसर्गो यथा–पराभवति शत्रून्, भूधातुरकर्माऽपि परोपसर्गयोगात्सकर्मकः १ । अन्यार्थे वृत्तिर्यथा–भारं वहति उद्यच्छतीत्यर्थः । वहधातुरकर्मकः,यथा नदी वहति स्रवतीत्यर्थः, अयमकर्माऽप्यर्थान्तरवृत्तित्वाद्भारं वहतीत्यत्र-सकर्मकः २ । अन्तर्भूतक्रियान्तरतया सकर्मकत्वं यथा–शत्रून् जयति अभिभवं करोतीत्यर्थः। राजा जयतीत्यत्रायमकर्मापि करोतिक्रियान्तर्योगात्सकर्मा ३ । णिगन्तो यथा–धर्मं जागरयति जनः, जागर्तिरयमकर्मापि णिगन्तत्वाद्धर्मं जागरयतीत्यत्र सकर्मकः ४ । अन्तर्णिगर्थो यथा–उपरमति कुमारं, रमयतीत्यर्थः । अत्र रम्धातुरणिगन्तोऽपि अन्तर्भूतणिगर्थत्वात्सकर्मकः। इति पञ्चोपायैः सकर्मकत्वं भावितम् ॥ ५९ ॥

अथ सकर्मकस्यापि चतुर्भिरुपायैरकर्मकत्वं भाव्यते—

**धातोरर्थान्तरे वृत्ते–र्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः, कर्मणोऽकर्मिका क्रिया ॥ ६० ॥**

व्याख्या—नदी वहति स्रवतीत्यर्थः । वहधातुः प्रापणार्थोऽप्यत्र स्रवणार्थतयाऽकर्मकः १ । कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वं, यथा--जीवति म्रियते वा । अत्र जीवति प्राणान् धारयति, म्रियते प्राणान् त्यजति, अत्र प्राणरूपकर्मधृण्त्यजधातुभ्यामुपसंगृहीतं, ततश्चैत्रो जीवतीत्यादावकर्मकत्वं २ । कर्मणः प्रसिद्धत्वात्, यथा–गर्जति

शरदि न वर्षति ३ । अविवक्षयाऽकर्मकत्वं यथा--दत्ते भुंक्ते असौ पठतीत्यादि ४ । अत्र सदपि ( कर्म ) न विवक्षितं। इति चतुरुपायैरकर्मकत्वं भावितं । अर्थान्तरवृत्तिश्चानेकार्थतया सोपसर्गतया च । यदुक्तं– "निपाताः सोपसर्गाश्च धातवश्चेति तेत्रयः । अनेकार्थाः स्मृताः शास्त्रपाठस्तेषां निदर्शनम् १" ॥ ६० ॥

सोपसर्गतयाऽनेकार्थत्वं ग्रन्थकृदेवाह—

धातोरर्थपरावर्तो–ऽप्युपसर्गात् कचिद्भवेत् । विहाराहारनीहार–प्रतीहारप्रहारवत् ॥ ६१ ॥

व्याख्या—स्पष्टः ॥ ६१ ॥

द्विकर्मकधातूनाह—

नीहृवहिकृषो ण्यन्ता दुहिब्रूप्रच्छिभिक्षिचिरुधिशास्वर्थाः ।
पचियाचिदण्डिकृग्रहमथि(मुष)जिप्रमुखा द्विकर्माणः ॥ ६२ ॥

व्याख्या—स्पष्टः ॥ ६२ ॥

उभयोः कर्मणोर्न्यादेः, प्रधानेतरता यथा । आरभ्यते क्रिया यस्मै, तद्दुग्धाद्यं प्रधानकम् ॥ ६३ ॥

व्याख्या—न्यादीनामुभयोः कर्मणोः गौणमुख्यत्वमाह— ॥ ६३ ॥

तत्सिद्ध्यै क्रियया यत्तु, व्याप्यते यद्गवादिकम् । तदप्रधानं गौणाख्यं,गोपालो दोग्धि गां पयः ॥६४॥

व्याख्या—तत्सिद्धौ प्रधानकर्मणः सिद्धये यद्गवादिकमानीयते तद्गौणं, यथा गोपालो दोग्धि गां पयः, अत्र पय इति प्रधानं कर्म, गामिति (च) गौणम् ॥ ६४ ॥

**यदा पयोऽर्थो कर्त्रादेः, प्रवृत्तिरविवक्षिता । तदा मुख्यासंनिधाना-द्गवादेरेव मुख्यता ॥ ६५ ॥**

व्याख्या—यदा कर्तुः पयसि प्रवृत्तिर्न विवक्ष्यते, तदा गवादेरेव मुख्यत्वम् ॥ ६५ ॥

कर्मोक्तौ द्वयोः कर्मणोरुक्तानुक्तविभागमाह—

**गौणं कर्म दुहादीनां, प्रत्ययो वक्ति कर्मजः । गौः पयो दुह्यतेऽनेन, शिष्योऽर्थं गुरुणोच्यते ॥६६॥**

व्याख्या—अत्र गौरिति गौणं कर्म, उक्तत्वात् तत्र प्रथमा, पयसो मुख्यकर्मणोऽनुक्तत्वात् द्वितीया । शिष्योऽर्थं गुरुणोच्यते, अत्र शिष्य इति गौणं कर्म, तत्रोक्तत्वात्प्रथमा, अर्थमिति मुख्यं कर्म, तत्रानुक्तत्वात् द्वितीया ॥ ६६ ॥

**न्यादीनां कर्मणो मुख्य-स्योक्तत्वं प्रत्ययाद्यथा । नीयते गौर्द्विजैर्ग्रामं, भारो ग्राममथोह्यते ॥ ६७ ॥**

व्याख्या—नीप्रमुखधातूनां मुख्यं कर्म प्रत्ययो वक्ति, यथा— नीयते गौर्द्विजैर्ग्रामं, गौरिति मुख्यं कर्म, तत्रोक्तत्वात्प्रथमा, ग्राममिति गौणं कर्म, तत्रानुक्तत्वात् द्वितीया । भारो ग्राममुह्यते चैत्रेण, अत्र भारो मुख्यं कर्म तत्र प्रथमा, ग्राममिति गौणं तत्र द्वितीया ॥ ६७ ॥

**गत्यर्थाकर्मका ण्यन्ताः, कर्तृकर्मोक्तिताजुषः । चैत्रेण गम्यते मैत्रो, ग्रामं मासमथास्यते ॥ ६८ ॥**

व्याख्या—ण्यन्तगत्यर्थेषु ण्यन्ताकर्मकेषु च प्रत्ययः कर्तरि कर्मणि च वक्ति । यथा—चैत्रेण मैत्रो ग्रामं गम्यते, ग्राम इति वा ( अत्र पक्षे मैत्रमिति द्वितीया )। आस्यते मासं चैत्रेण मैत्रः, आस्यते मासश्चैत्रेण मैत्रं इति वा। यदुक्तं "न्यादीनामष्टानां गत्यर्थाकर्मणां णिगन्तानाम्। मुख्यं कर्मोक्तं स्याद् गौणं द्वादश। दुहादीनाम्॥ १ ॥" दुहि १ याचि २ प्रच्छि ३ रुधि ४ चि ५ ब्रू ६ भिक्षि ७ ज्य ८ थिं ९ शासि १० मथ्यर्था ११ दण्डि १२; नी १ वहि २ हृ ३ ग्रहि ४ कृषि ५ मुषि ६ कृ ७ पचि ८ द्विकर्माणः। अत्र कौमुद्युक्तान्युदाहरणानि। यथा—"न्यादयो १ ण्यन्तलिष्कर्म २ गत्यर्था ३ मुख्यकर्मणि। प्रत्ययं यान्ति दुह्यादि ४ गौणे त्वन्ये यथारुचि ५॥१॥ निन्ये विजनमजागरि रजनिमगमि मदमयाचि संभोगम्। गोपी हावमकार्यत भावश्चैनामनन्तेन ॥ २ ॥ अनन्तेन गोपी विजनं निन्ये इति न्यादिः १। गोपी रजनिमजागरि इति ण्यन्तनिष्कर्मा २। गोपी मदमगमि इति ण्यन्तगत्यर्थः ३। एतेषु त्रिषु गोपी मुख्यं कर्म, तस्य प्रत्ययेनोक्तत्वादुक्ते कर्मणि प्रथमा। गोपी संभोगमयाचि इति दुह्यादि। अत्र गोपी गौणं कर्म, तस्य प्रत्ययोक्तत्वात्प्रथमा। गोपी हावमकार्यत गोपीं भावोऽकार्यत वा, अन्ये तु यथारुचीतिवचनादत्र गौणे मुख्ये च प्रत्ययोत्पत्तिः। अनन्तेनेति सर्वत्र योज्यम्

बोधा १ हारार्थ २ शब्दा ३ प्य-धातौ ण्यन्ते द्वयोक्तता।
यथार्थं बोध्यते शिष्यो, गुरुणार्थोऽथ शिष्यकम्॥ ६९ ॥

व्याख्या—ज्ञानार्था धातवः, आहारार्था धातवः, शब्दकर्मकाश्च ण्यन्ता धातवः द्वयोरपि कर्मणोर्मुख्यगौणयोः उक्तत्वं भजन्ते। यथेत्यादि स्पष्टम्॥ ६९ ॥

ओदनं भोज्यते पुत्रो, मात्रा पुत्रमथौदनः ।
पाठ्यते गुरुणा ग्रन्थं, शिष्यो ग्रन्थोऽथ शिष्यकम् ॥ ७० ॥

व्याख्या—स्पष्टः ॥ ७० ॥

कर्मादीनां त्यादिनैवोक्तता कृत्यादिभिर्यथा । गम्या मैत्रेण गौर्ग्रामं, गम्यो ग्रामोऽथ तेन गाम् ॥ ७१ ॥

व्याख्या—यथा त्यादिप्रत्ययेन कर्मादीनामुक्तत्वं स्यात् तथा कृत्यादिप्रत्ययैरपि उक्तत्वं स्यात् । यथा—गम्या मैत्रेण गौर्ग्रामं, गम्यो ग्रामो मैत्रेण गाम् ॥ ७१ ॥

द्वैकर्म्यहेतुरहिते णिगन्तधातौ द्विकर्तृता तत्र । उक्तः प्रयोजकः स्यात्, कर्ताऽनुक्तः प्रयोज्यस्तु ॥७२॥

व्याख्या—द्विकर्मताकारणरहिते णिगन्तधातौ कर्तृद्वयं स्यात् । उक्तः प्रयोजकः । अनुक्तः प्रयोज्यः ॥ ७२ ॥

यथा—

जनेन पाचयित्वाऽन्नं, भक्षयत्यङ्गजैः पिता । जाप्यन्तेऽन्तर्द्विषस्तीर्थ-कृता भव्यजनव्रजैः ॥ ७३ ॥

व्याख्या—अत्र पिता उक्तः कर्ता, अत एव तत्र प्रथमा । अङ्गजैरिति अनुक्तः कर्ता, तत्र तृतीया । इदं कर्तर्युदाहरणं । भव्यजनव्रजैः तीर्थकृताऽन्तर्द्विषो जाप्यन्ते, इदं कर्मण्युदाहरणं, अत्र कर्मण एवोक्तत्वं, द्वयोः कर्त्रोरनुक्तत्वमेव ।

जाप्यन्ते इति जिधातोर्णिगि "णौ क्रीजीङः" (४-२-१०) इत्याकारे "आर्तिरीति" (अर्त्तिरीव्लीह्रीक्नूयिक्ष्माय्यातां पुः ४-२-२१) पागमे कर्मणि वर्तमानाया आत्मनेपदबहुवचने क्यप्रत्ययेऽत्र जाप्यन्ते इति सिद्धं ॥ ७३ ॥

इत्येककर्मद्विकर्मकाकर्मकधातुस्वरूपं । अथवा प्रकारान्तरेण धातुस्वरूपमाह—

गणजा नामजाः सौत्रा, धातवस्त्रिविधाः स्मृताः । भ्वाद्यादिनवकोक्ता ये, गणजास्ते प्रकीर्तिताः ॥७४॥

व्याख्या—गणजा भ्वादिप्रमुखनवादिप्रोक्ताः । नामजाः क्यन्काम्यादिप्रत्ययान्तानि नामानि । सौत्राः कण्ड्वादिप्रमुखाः ॥ ७४ ॥

गणजधातुस्वरूपमाह—

अदादयः कानुबन्धा—श्चानुबन्धा दिवादयः । स्वादयष्टानुबन्धाश्च, तानुबन्धास्तुदादयः ॥ ७५ ॥
रुधादयः पानुबन्धा, यानुबन्धास्तनादयः । क्रादयः शानुबन्धाः स्यु—र्णानुबन्धाश्चुरादयः ॥ ७६ ॥
कचटतपयशणवर्णानुबन्धवर्जा भवन्ति च भ्वाद्याः ।
उपलक्षणमिति तेषां भ्वादिकगणनवकधातूनाम् ॥ ७७ ॥

व्याख्या—श्लोकत्रयं स्पष्टम् ॥ ७५-७६-७७ ॥

नामजधातूनाह—

काम्यक्यन्णिज्युतान्तानि, क्विप्क्यङ्न्तानि यानि च ।
तानि नामानि धातुत्वं, यान्ति ते नामधातवः ॥ ७८ ॥

व्याख्या—काम्यादिप्रत्ययान्तानि नामधातुत्वं यान्ति ॥ ७८ ॥

इच्छायां मुख्यादाचारे, कर्माधारोपमानतः ।
काम्यः क्यन् च द्वितीयान्तात्, णिजप्यस्मात् कृगादिषु ॥ ७९ ॥

पुत्रीकाम्यति पुत्राढ्यः, पुत्रीयति सुतायुतः । गुरुर्मठेऽपि सौधीयन्, प्राज्ञं शिष्यं सुतीयति ॥ ८० ॥

व्याख्या—इच्छार्थात् मुख्यशब्दात् द्वितीयान्तात् काम्यप्रत्ययः स्यात् क्यन् च। यथा पुत्रीकाम्यति पुत्राढ्यः पुत्रैराढ्यः पुरुषः पुत्रीकाम्यति—पुत्रीमिच्छति पुत्रीकाम्यति। "द्वितीयायाः काम्य"(३-४-२२) इति काम्यप्रत्ययः। क्यन् प्रत्ययो यथा-पुत्रीयति सुतायुतः सुताभिर्युतः पुरुषः पुत्रीयति, पुत्रमिच्छति पुत्रीयति । "अमाव्ययात् क्यन् चेति"(३-४-२३)क्यन् प्रत्ययः। क्यनीति (क्यनि ४-३-११२) सूत्रेण इकारः तथा 'आचारे कर्माधारोपमानतः क्यन्' (३-४-२४) आचारेऽर्थे उपमानवाचिशब्दात् कर्मणि आचारे च क्यन् प्रत्ययः स्यात् । आधारे यथा गुरुर्मठेऽपि सौधीयन् सौधे इव आचरन् सौधीयन् "आधाराच्चोपमानादाचारे" (३-४-२४) इति क्यन् । कर्मणि यथा—प्राज्ञं शिष्यं सुतीयति गुरुः, प्राज्ञं पण्डितं

शिष्यं सुतीयति सुतमिवाचरति सुतोपमं गणयतीत्यर्थः । "आधाराच्चोपमानादाचारे" इति क्यन् प्रत्ययः । कर्मोदाहरणस्य पूर्वकथने प्राप्तेऽपि बन्धानुलोम्यात् पश्चात्कथनं । 'णिजप्यस्मात् कृगादिषु' अस्मात् मुख्यशब्दात् कृगादीनां धातूनां योगे णिज् प्रत्ययः स्यात् ॥ ७९–८० ॥

अस्योदाहरणान्याह—

**प्रासुकमन्नं कृतयति, धर्मयति श्रोतृषूपविष्टेषु ।**
**शिष्यान् दक्षयति गुरु-र्भव्येषु च बोधिबीजयति ॥ ८१ ॥**

व्याख्या—प्रगता असवः प्राणा यस्मात्तत्प्रासुकं एवंविधं धान्यं गुरुः कृतयति कृतं स्वयं गृहस्थैर्निष्पादितं गृह्णाति कृतयति " णिज् बहुलं नाम्नः कृगादिषु " ( ३-४-४२ ) इतिसूत्रेण णिज् प्रत्ययः । एवं धर्मं कथयति धर्मयति णिज् । शिष्यान् दक्षान् करोति दक्षयति । बोधिबीजं वपति बोधिबीजयति भव्येषु । सर्वत्र णिज् ॥ ८१ ॥

**कर्त्रुपमानादाचारे, क्विप्क्यङौ प्रथमान्ततः । मुनिर्मेरवति स्थैर्या-त्तपोभिस्तपनायते ॥ ८२ ॥**

व्याख्या— कर्त्रुपमानवाचिशब्दादाचारेऽर्थे क्विप्क्यङौ प्रत्ययौ भवतः । यथा—'मुनिर्मेरवति स्थैर्यात् ' मेरुरिवाचरति मेरवति " कर्तुः क्विप् गल्भक्लीबहोडात्तु ङित् " ( ३-४-२५ ) इति सूत्रेण क्विप् । तपन इवाचरति तपनायते । " क्यङ्" (३-४-२६) इति सूत्रेण क्यङ् प्रत्ययः ॥ ८२ ॥

॥ ६८ ॥

च्व्यर्थाद्यर्थविशेषेऽपि, क्यङ् भृशायत आदिषु । अभूतपूर्वात् कृभ्वस्ति–योगे च्विः कर्मकर्तृतः ॥८३॥

व्याख्या––च्व्यर्थोऽभूततद्भावः तत्रापि क्यङ् यथा–अभृशो भृशो भवति भृशायते "च्व्यर्थे भृशादेः स्तोः" ( ३-४-२९ ) इति क्यङ्, इत्यादिषु (तपूर्वतः) ज्ञेयः । अभूतः, कृधातुयोगे कर्मणि अभूततद्भावे च्विप्रत्ययः, भूधातुयोगेऽस्तिधातुयोगे च कर्तरि अभूततद्भावे च्विप्रत्ययः स्यात् ॥ ८३ ॥

अस्योदाहरणान्याह—

विमलीकुरुते विश्वं, यशस्तस्य पटूभवेत् । अमृतीस्याद्विषमपि, पुण्यं यस्य विजृम्भते ॥ ८४ ॥

व्याख्या—विमलीकुरुते विश्वं, अविमलं विमलं करोति विमलीकुरुते । "कृभ्वस्ति कर्मकर्तृभ्यां (प्रागतत्तत्त्वे च्विः ७-२-१२६) इति सूत्रेण कर्मणि च्विः । अपटु पटु भवति (भवेत्) पटूभवेत् अत्र कर्तरि च्विः । अमृतीस्यात् विषमपि, अनमृतं अमृतं स्यात्, अत्र असूधातुयोगे कर्तरि च्विः ॥ ८४ ॥

अथ सौत्रधातूनाह—

सौत्राः कण्ड्वादयोऽन्दोलण्, प्रेङ्खोलण् प्रमुखा अपि ।
आत्मोभयपरपदा–दथवा धातवस्त्रिधा ॥ ८५ ॥

व्याख्या—कण्ड्वादयः सर्वे धातवः सौत्रा ज्ञेयाः कण्डूग् गात्रविनामे "( धातोः) कण्ड्वादेर्यक्" ( ३-४-८ ) इति

यक्प्रत्यये (कण्डूयति) कण्डूयते ॥ महीङ् वृध्ध्यर्चयोः महीयते। हृणीङ् रोषे, अयं लज्जायामपि, हृणीयते मन्तु वैमनस्य रोषयोः मन्तूयति। इत्यादिकाः कण्ड्वादयः, सर्वेऽपि धातवोऽर्थसंयुक्ता मत्कृतकविकल्पद्रुमाभिधहैमधातुपाठादवगन्तव्याः। अन्दोलण् प्रेङ्खोलण् प्रमुखा अपि सौत्रधातवो ज्ञेयाः । अन्दोलण् प्रेङ्खोलण् आन्दोलने आन्दोलयति प्रेङ्खोलयति । प्रमुखशब्दात् वीजण् वीजने वीजयति । रिषि लेखने रेषयति । इत्यादयो ज्ञेयाः । इति त्रिविधा धातव उक्ताः । अथ प्रकारान्तरेण धातुत्रैविध्यमाह—आत्मनेपदी उभयपदी परस्मैपदी चेति त्रिधा धातवः ॥ ८५ ॥

ङनुबन्ध इदनुबन्धः, कर्तर्यप्यात्मनेपदी धातुः ।
ईगनुबन्धस्तूभय–पदी परस्मैपदी शेषः ॥ ८६ ॥

व्याख्या—ङ् अनुबन्धो यस्य स ङनुबन्धः । तथा इत् अनुबन्धो यस्य स इदनुबन्धः । एवंविधो धातुः कर्तर्यपि आत्मनेपदी, न केवलं कर्मणि भावे (वा), किं तु कर्तर्यपीत्यपेरर्थः । ईगनुबन्धस्तूभयपदी ईकारो गकारश्चानुबन्धौ यस्य स ईगनुबन्धः । एवंविधो धातुरुभयपदी । शेषो धातुः परस्मैपदी । ङनुबन्धो यथा—'शीङ्क् स्वप्ने' शेते । इदनुबन्धो यथा—'एधि वृध्धौ' एधते । उभयत्र इङितः कर्तरी ( ३-३-२२ ) त्यात्मनेपदं । ईगनुबन्धो यथा—'डुपचींष् पाके' पचति पचते । 'डुकृंग् करणे' करोति कुरुते । ईगितः ( ३-३-९५ ) इति फलवत्कर्तरि आत्मनेपदं, अन्यथा परस्मैपदं । शेषो धातुर्यथा— भू सत्तायां भवति, अत्र "शेषात्परस्मै" ( ३-३-१०० ) इति परस्मैपदं इत्यादि ॥ ८६ ॥

**सर्वेभ्योऽपि हि धातुभ्यो, दश त्यादिविभक्तयः । वर्तमानासप्तम्याद्याः, स्युराख्यातप्रकीर्तिताः ॥८७॥**

व्याख्या—सर्वेभ्यो धातुभ्यः परा वर्तमानासप्तमीप्रमुखा दशापि त्यादिविभक्तयः आख्यातवृत्तिकथिताः स्युः भवन्ति– वर्तमाना १, सप्तमी२, पञ्चमी ३, ह्यस्तनी४, अद्यतनी ५, परोक्षा ६, आशीः ७, श्वस्तनी ८, भविष्यन्ती ९, क्रियातिपत्तिः १० इति दश त्यादिविभक्तयः ॥ ८७ ॥

**तत्रादिमाश्चतस्रः स्युः, शित्संज्ञा अशितः पराः । प्रत्येकं वचनान्यष्टा-दश सर्वासु तास्वपि ॥ ८८ ॥**

व्याख्या— आद्याश्चतस्रो विभक्तयः शित्संज्ञाः, अन्या अशितः । प्रत्येकमेकैकस्यां विभक्तौ अष्टादश वचनानि भवन्ति ॥ ८८ ॥

**दशानामपि पूर्वाणि, वचनानि नवैव हि । परस्मैपदसंज्ञानि, प्रत्ययौ च शतृक्वसू ॥ ८९ ॥**

व्याख्या—दशानामपि विभक्तीनामाद्यानि नव वचनानि शतृक्वसू च प्रत्ययौ परस्मैपदसंज्ञानि भवन्ति ॥ ८९ ॥

**वचनानि नवान्त्यानि, कानानशौ च प्रत्ययौ । आत्मनेपदमेते च, योज्यते धात्वपेक्षया ॥ ९० ॥**

व्याख्या—सर्वासां विभक्तीनामन्त्यानि नव वचनानि कानानशौ च प्रत्ययौ आत्मनेपदसंज्ञानि भवन्ति । एते परस्मैपदात्मनेपदे धात्वपेक्षया योज्येते । धातुर्यदि परस्मैपदी तदा परस्मैपदं, यद्यात्मनेपदी तदात्मनेपदं योज्यम्॥९०॥

अथ कस्मिन्नर्थे का विभक्तिरित्याह—

**वर्तमाने वर्तमाना, विधिमार्गे च सप्तमी । क्रियादेशे पञ्चमी च, कालेऽतीतेऽग्रिमं त्रयम् ॥ ९१ ॥**

व्याख्या—वर्तमाने वर्तमाना विभक्तिर्भवति, यथा—वर्तते मेरुः । विधिमार्गे सप्तमी, यथा—व्रतं रक्षेत् । क्रियाया आदेशे पञ्चमी, यथा—कटं करोतु भवान् । अग्रिमं त्रयं अग्रेतनास्तिस्रो विभक्तयो ह्यस्तन्यद्यतनीपरोक्षाभिधा अतीतकाले भवन्ति, यथा—रामो राज्यमकरोत् ह्यस्तनी, अभुङ्क्त भवान् अद्यतनी, जघान कंसं वासुदेव इति परोक्षार्थः ॥९१॥

**स्मयोगे वर्तमानापि, आशिष्याशीः सपञ्चमी । भाविकाले चाग्रिमे द्वे, क्रियापाते तथान्तिमा ॥९२॥**

व्याख्या—स्मयोगे वर्तमाना । आशीर्वादविषये आशीः पञ्चमी च । भाविकालेऽनागतकालेऽग्रिमं द्वयं अग्रेतने द्वे विभक्ती श्वस्तनीभविष्यन्तीलक्षणे भवतः । क्रियायाः पाते विनाशेऽन्तिमा क्रियातिपत्तिर्भवतीत्यर्थः ॥ ९२ ॥

आसां पूर्वोक्तानां च विभक्तीनामुदाहरणानि ग्रन्थकार एवाह—

**नदी वहति तिष्ठन्ति, शैलाः पाति नृपः प्रजाः । दानं दद्यात्तपः कुर्यात्, पालयेच्छीलमार्हतः ॥९३॥**

व्याख्या—पूर्वार्धे वर्तमानाया उत्तरार्धे च सप्तम्या उदाहरणानि ज्ञेयानि । नदी वहतीत्यादौ "सतीति" (५-२-१९) वर्तमाना । दानं दद्यादित्यादौ "विधिनिमन्त्र (णामन्त्रणाधीष्टसंप्रश्नप्रार्थने ५-४-२८) णेति" सप्तमी ॥९३॥

वत्सागच्छास्स्व सिध्धान्तं, शृणु संवृणु मानसम् ।
शृणोतु साधुवर्गोऽयं, स्वाध्यायं करवाण्यहम् ॥ ९४ ॥

व्याख्या—हे वत्स! त्वमागच्छ, त्वं आस्स्व तिष्ठ इत्यादौ ' प्रैषानुज्ञावसरे कृत्यपञ्चम्यौ " ( ५-४-२९ ) इतिसूत्रेण क्रियादेशे पञ्चमी ॥ ९४ ॥

जिनोऽर्थमवदत्सूत्र–मकार्षुर्गणधारिणः । प्रससार च सिद्धान्त–स्तं पठन्ति स्म साधवः ॥ ९५ ॥

व्याख्या—जिनोऽर्थमवददित्यत्र ' अनद्यतने ह्यस्तनी ' ( ५-२-७ ) इतिसूत्रेणातीतकाले ह्यस्तनी । गणधारिणः सूत्रमकार्षुः, अत्र'अद्यतनी ' ( ५-२-४ ) इतिसूत्रेणातीतकालेऽद्यतनी । सिद्धान्तः प्रससार, अत्र ' परोक्षे ' ( ५-२-१२ ) इतिसूत्रेणातीतकाले परोक्षा । तं पठन्ति स्म साधवः, अत्र ' स्मे च वर्तमाना ' (५-२-१६) इतिसूत्रेण स्मयोगेऽतीतकाले वर्तमाना ॥ ९५ ॥

धर्मो जीयाच्छिवं भूया–द्भूयासुः सुखिनोऽङ्गिनः । पापानि प्रलयं यान्तु, चिरं जीवन्तु सज्जनाः ॥९६॥

व्याख्या—धर्मो जीयात्, पापानि प्रलयं यान्तु इत्यादौ " आशिष्याशीःपञ्चम्यौ " ( ५-४-३८ ) इतिसूत्रेण आशीःपञ्चम्यौ ॥ ९६ ॥

पठितासि यदा वेदान्, भ्रमिष्यसि तदा भवे । सिद्धान्तमभणिष्यश्चे–दगमिष्यस्तदा शिवम् ॥९७॥

व्याख्या—पठितासि इत्यत्र "अनद्यतने श्वस्तनी" (५-३-५) इतिसूत्रेण अनागतकाले श्वस्तनी। भ्रमिष्यसि तदा भवे, अत्र 'भविष्यन्ती' ( ५-३-४ ) इतिसूत्रेणानागतकाले भविष्यन्ती । सिद्धान्तमभणिष्य इत्यादौ 'सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः' ( ५-४-९ ) इतिसूत्रेण क्रियाया अनिष्पत्तौ क्रियातिपत्तिः ॥ ९७ ॥

विभक्तिविशेषमाह—

**भविष्यत्काले माङ्योगे—ऽद्यतनी मा भवं भ्रमीः। ह्यस्तन्यपि स्मसहिते, मा स्म पश्यद्द्विषो भवान् ॥९८॥**

व्याख्या—मा भवं भ्रमीः, अत्र माङ्योगे 'माङ्यद्यतनी' ( ५-४-३९ ) इति सूत्रेण भविष्यत्कालेऽद्यतनी स्मसहिते माङि ह्यस्तन्यपि अपिशब्दात् अद्यतनी, मा स्म पश्यत् (द्विषोभवान्) । अत्र 'सस्मे ह्यस्तनी च' (५-४-४०) इतिसूत्रेण ह्यस्तनी । अद्यतन्यां मा स्म द्राक्षीरित्याद्यनुक्तमपि ज्ञेयम् ॥ ९८ ॥

**आक्षेपपूर्वमाक्रोशे, तत्र शत्रानशावपि । मा पश्यन् दोषदर्शीयो, मा ब्रुवाणोऽन्यदोषवाक् ॥ ९९ ॥**

व्याख्या—आक्षेपपूर्वं आक्रोशार्थे तत्र माङ्योगे शत्रानशौ भवतः । मा पश्यन् मा ब्रुवाण इत्यत्र " तौ माङ्याक्रोशेषु " ( ५-२-२१ ) इतिसूत्रेण शत्रानशौ ॥ ९९ ॥

**वर्तमाना पुरायावत्—कदाकर्हिप्रयोगतः । किंवृत्ते चापि लिप्सायां, भिक्षां कोऽत्र ददाति च ? ॥१००॥** ॥ ७१ ॥

व्याख्या—पुरा यावत् कदा कर्हि एतेषां प्रयोगेऽनागतार्थे वर्तमाना स्यात् । यथा—पुरा भुङ्क्ते यावद् भुङ्क्ते, भोक्ष्यते

इत्यर्थः । अत्र 'पुरायावतो वर्तमाना' ( ५-३-७) इतिसूत्रेण वर्तमाना । तथा कदा भुङ्क्ते कर्हि भुङ्क्ते, अत्र 'कदाकर्ह्योर्नवा' (५-३-८) इतिसूत्रेणानागते काले वर्तमाना, कदा भोक्ष्यते इत्यर्थः किंवृत्ते चापि लिप्सायां वर्तमाना स्यात्। विभक्त्यन्तस्य डतरडतमान्तस्य च किमो वृत्तं (किंवृत्तं), लब्धुमिच्छा लिप्सा तत्र वर्तमाना । यथा—को भिक्षां ददाति ? कतरः कतमो वा भिक्षां ददाति । अत्र 'किंवृत्ते लिप्सायां' ( ५-३-९ ) इति सूत्रेण भविष्यत्काले वर्तमाना । को भिक्षां दास्यतीति लिप्सया भिक्षुश्चिन्तयतीत्यर्थः ॥ १०० ॥

**अतीतेऽपि भविष्यन्ती, स्मृत्यर्थोपपदेऽयदि । साधो! स्मरसि सिद्धाद्रिं, यास्यावो गुरुभिः सह ? ॥१०१॥**

व्याख्या—स्मृत्यर्थं उपपदं समीपवर्ति पदं यस्य तस्मिन् धातौ यच्छब्दवर्जमतीतकालेऽपि भविष्यन्ती स्यात् । यथा—स्मरसि साधो ! आवां सिद्धाद्रिं यास्यावः, गतावित्यर्थः । अत्र 'अयदि स्मृत्यर्थे भविष्यन्ती' ( ५-२-९ ) इति सूत्रेणातीतकाले भविष्यन्ती ॥ १०१ ॥

**धातुभ्यः शव् शिति प्रायः, कर्तरि श्यो दिवादितः। स्वादिभ्य श्नुस्तुदादेः शः, श्नो रुधादेः स्वरात्परः॥१०२॥**

व्याख्या—विशेषप्रत्ययाप्राप्तौ प्रायः सर्वधातुभ्यः शिति परे कर्तरि शव् प्रत्ययः स्यात् । यथा भवतीत्यादौ-दिवादितः श्यप्रत्ययः, यथा दीव्यति । स्वादिभ्यः श्नुप्रत्ययः, यथा सुनोति । तुदादेः शप्रत्ययः, यथा तुदति। रुधादेः श्नः, यथा रुणद्धि ॥ १०२ ॥

उस्तनादेश्चुरादेर्णिच्, क्रादेः श्नाप्रत्ययो भवेत्। अदादिभ्यो न कोऽप्येषु, क्यस्त्वेभ्यो भावकर्मणोः ॥१०३॥

व्याख्या—तनादेरुप्रत्ययः यथा तनोति । चुरादेर्णिच्, यथा चोरयति । क्र्यादेः श्नाप्रत्ययः, यथा क्रीणाति । अदादिभ्यः कोऽप्येषां मध्यादेकोऽपि प्रत्ययो न भवति, यथाऽत्ति । एभ्यः सर्वधातुभ्यो भावकर्मणोः क्यप्रत्ययः स्यात्, यथा क्रियते ॥ १०३ ॥

येषु प्रत्ययेषु गुणः स्यात् तानाह—

तिः सिर्मिर्वर्तमानाया—स्त्वान्यावामास्तथा च ऐः । आवहै आमहै ज्ञेया, दिस्मो गुणिनस्तथा ॥१०४॥

व्याख्या—वर्तमानायाः तिव् सिव् मिव् । पञ्चम्याः तुव् आनिव् आमव् ऐव् आवहैव् आमहैव् । ह्यस्तन्या दिव् सिव् अम्व् एते प्रत्यया गुणिनो ज्ञेयाः । एतेषु विभक्तिवचनेषु परेषु गुणार्हाणां धातूनां गुणः स्यादित्यर्थः । क्रमेणोदाहरणानि—'इंक् स्मरणे' वर्तमानातिवादौ अध्येति अध्येषि अध्येमि । अथ पञ्चमी—अध्येतु अध्ययानि अध्ययाव अध्ययाम । इङ्क् अध्ययने अनेन धातुना आत्मनेपदं दर्श्यते, पूर्वधातोरात्मनेपदित्वाभावात्, अध्ययै अध्ययावहै अध्ययामहै । अथ ह्यस्तनी 'विदिंक् ज्ञाने' ह्यस्तन्या दिवि अवेदम्, सिवि अवेत्—द् अवेः, "सेः सूद्‌धां च रुर्वा" ( ४-३-७९) इति सिवो लुकि दस्य वा रुः, अम्वि अवेदम् ॥ १०४ ॥

अन्यार्थश्चास्मदर्थश्च, णव् गुणी थव् क्वचिद्‌मौ । सिजाशिष्युपधा सेटि, नाम्युपान्त्येष्वनित्यपि ॥१०४॥

व्याख्या—अन्यदर्थवाची अस्मदर्थवाची च परोक्षाणव् गुणी ज्ञेयः। यथा—ममार्ज, अत्र "लघोरुपान्त्यस्य" (४-३-४) इति पूर्वं गुणः, पश्चात् "मृजोऽस्य वृद्धिः" (४-३-४२) इति वृद्धिः। अस्मदर्थवाचिनि णवि परेऽपि एतदेव रूपं। थवि ममार्जिथ, अत्रापि पूर्ववद्गुणः। क्वचित् ध्वमौ गुणिनौ, ह्यस्तनीध्वम् अद्यतनीध्वम् इति द्वावपि ध्वमौ क्वचिद्गुणिनौ भवतः। यथा—अमृड्ढ्वं अमार्जिध्वं, 'धूगौदितः' (४-४-३८) इति वेट्। क्वचिद्ग्रहणात् अकृड्ढ्वम् अकृध्वम्, अत्र न गुणः, "सिजाशिषावात्मने" (४-३-३५) (ऋवर्णात् ४-३-३६) इति सिचः कित्त्वात् "सो धि वेति" (४-३-७२) सिचो वा लुकि रूपद्वयं। सिजाशिषि सेटि उपान्त्यं गुणवत् स्यात्, नाम्युपान्त्येषु धातुषु अनिटि इड्रहितत्वेऽपि उपान्त्यं गुणवद्भवति। यथा सेट्त्वे अमार्जीत् अमार्जिष्टाम् अमार्जिषुः इत्यादि। इडभावे अमार्क्षीत् अमार्ष्टाम् अमार्क्षुः इत्यादि "धूगौदितः" इतीड्विकल्पः। अत्र सेट्त्वेऽनिट्त्वेऽपि पूर्वं "लघोरुपान्त्यस्य" इत्युपान्त्यस्य गुणः, पश्चात् "मृजोऽस्य वृद्धिः" इति वृद्धिः ॥ १०५ ॥

**क्रियातिपत्तिः सर्वाऽपि, भविष्यन्ती तथाऽखिला।**
**श्वस्तनी च गुणिन्युक्ता, परेऽपि प्रत्यया वितः ॥ १०६ ॥**

व्याख्या—सर्वाऽपि क्रियातिपत्तिर्गुणिनी, यथा—अभविष्यदित्यादि। सर्वाऽपि भविष्यन्ती गुणिनी, यथा—भविष्यतीत्यादि। श्वस्तनी च सर्वाऽपि गुणिनी, यथा—भवितेत्यादि। परेऽपि वितो वकारानुबन्धाः प्रत्ययाः शव्तिव्-

प्रमुखा गुणिनः स्युः । शव् यथा–भवति । तिव् यथा–एतिर्वर्तते ( गतिर्वर्तते ) इणधातुर्वा वर्तत इत्यर्थः ॥ १०६ ॥

अथ तद्धितम्—

**अपत्येऽणेयणिञ्ञ्याद्याः, शैवः शैवेय आर्षभिः । कौरव्य आदेणैररेरण्ञ्येययेनायनण्मुखाः॥ १०७॥**

व्याख्या—अथ केचन तद्धितप्रत्यया निरूप्यन्ते–अपत्येऽर्थेऽण् एयण् इञ् ञ्य इत्याद्याः प्रत्यया भवन्ति । अण् यथा–शिवस्यापत्यं शैवः, "शिवादेरण्" ( ६-१-६० ) इत्यणप्रत्ययः । एयण् यथा–शिवाया अपत्यं शैवेयः, "द्विस्वरादनद्याः" ( ६-१-७१ ) इत्येयण् । इञ् यथा–ऋषभस्यापत्यं आर्षभिः, "अत इञ्" ( ६-१-३१ ) इतीञ् । ञ्यो यथा–कुरोर्ब्राह्मणस्यापत्यं कौरव्यः, "कुर्वादेर्ञ्यः" ( ६-१-१०० ) इति ञ्यः । आद्यशब्देन ये सूचितास्तान् स्वयमाह–आदेणैररेरण्० णैर एरण् ञ्य ईय य ईन आयनण् इत्यादयो ज्ञेयाः । एषामुदाहरणानि यथा–णैरः चटकस्य चटकाया वाऽपत्यं पुरुषः चाटकैरः "चटकाण्णैरः स्त्रियां तु लुप्" ( ६-१-७९ ) इति णैरप्रत्ययः । स्त्री चेदपत्यं चटका, अनेनैव सूत्रेण णैरप्रत्ययलुक् । एरण् यथा–दास्या अपत्यं दासेरः, "क्षुद्राभ्य एरण्" ( ६-१-८०) पक्षे "द्विस्वरादनद्याः" इति एयण् दासेयः । ञ्यो यथा–भ्रातुरपत्यं भ्रातृव्यः " भ्रातुर्व्यः (६-१-८८) इतिसूत्रेण व्यप्रत्ययः । ईयो यथा–भ्रातुरपत्यं भ्रात्रीयः, स्वसुरपत्यं स्वस्रीयः "ईयः स्वसुश्च" ( ६-१-८९ ) इति ईयप्रत्ययः । यो यथा–श्वशुरस्यापत्यं श्वशुर्यः "श्वशुराद्यः" ( ६-१-९१ ) इति यप्रत्ययः । ईनो यथा–कुलस्यापत्यं कुलीनः, "कुलादीनः" ( ६-१-९६ ) इति ईनप्रत्ययः ।

आयनण् यथा—नडस्यापत्यं नाडायनः, चरस्यापत्यं चारायणः, ‘नडादिभ्य आयनण्’ ( ६-१-५३ ) इति आयनण् प्रत्ययः ॥ १०७ ॥

रागाट्टोऽणिकणौ रक्ते, कौसुम्भलाक्षिकादिषु ।
शिवोऽस्य देवतेत्यर्थेऽण्, शैवबौद्धार्हतादिषु ॥ १०८ ॥

व्याख्या—रज्यतेऽनेन वस्त्रादीति रागः कुसुम्भादिः । टा इति तृतीयान्तोपलक्षणं । कोऽर्थः ? तृतीयान्तात् रक्तेऽर्थेऽण् इकण् इत्येतौ प्रत्ययौ भवतः । दृष्टान्तमाह—कौसुम्भेन रक्तं कौसुम्भं, “रागाट्टो रक्ते” (६-२-१) इत्यण् प्रत्ययः । लाक्षया रक्तं लाक्षिकं, “लाक्षारोचनादिकण्” ( ६-२-२ ) ( इति इकण् ) प्रत्ययः । शिवो देवताऽस्य शैवः, बुद्धो देवताऽस्य बौद्धः, अर्हन् देवताऽस्य आर्हतः, “देवता” ( ६-२-१०१ ) इत्यण् ॥ ०८ ॥

गृह्यते चाक्षुषं रूप—मुह्यते चातुरं त्वनः । दार्षदाः सक्तवः पिष्टे, क्षुण्णे त्वौदूखला यवाः ॥ १०९ ॥

व्याख्या—चक्षुषा गृह्यते चाक्षुषं, ‘क्वचिद्’ (६-२-१४५) इति सूत्रेण प्राग्जितादण्प्रत्ययः । चतुर्भिरुह्यते चातुरं, क्वचिदित्यनेन प्राग्जितादण् । अनः शकटं । दृषदि पिष्टा दार्षदाः सक्तवः, क्वचिदित्यण् । उदूखले क्षुण्णा औदूखला यवाः, क्वचिदित्यण् ॥ १०९ ॥

समूहेऽणादयस्तत्र, शात्रवाश्वीयहास्तिकम् । ग्रामता रथकव्या च, वात्यावातूलराजकम् ॥ ११० ॥

व्याख्या—समूहेऽणादयः प्रत्यया भवन्ति, यथा—शत्रूणां समूहः शात्रवं, "षष्ठ्याः समूहे" ( ६-२-९ ) इत्यण् । अश्वानां समूह आश्वीयं "वाश्वादीयः" ( ६-२-१९ ) इति ईयप्रत्ययः । हस्तिनां समूहो हास्तिकं "कवचिहस्त्यचित्ताच्चेकण्" ( ६-२-१४ ) । ग्रामाणां समूहो ग्रामता "ग्रामजनबन्धुगजसहायात्तल्" ( ६-२-२८ ) इति तल्प्रत्ययः । रथानां समूहो रथकट्या "गोरथवातात् त्रल्कट्यलूलम्" ( ६-२-२४ ) इति कट्यल्प्रत्ययः । वातानां समूहो वात्या "पाशादेश्च ल्यः" (६-२-२५) इति ल्यप्रत्ययः। विकल्पकरणात्तु वातानां समूहो वातूलं "गोरथवातात् त्रल्कट्यलूलम्" इति ऊलप्रत्ययः । राज्ञां समूहो राजकं "गोत्रोक्षवत्सोष्ट्रवृद्धाजोरभ्रमनुष्यराजराजन्यराजपुत्रादकञ्" ( ६-२-१२ ) इत्यकञ्प्रत्ययः ॥ ११० ॥

तद्धितप्रत्ययानेवाह—

## तद्वेत्त्यधीतेऽणिकणौ, वैयाकरणतार्किकौ । तस्येदमर्थे त्वदीयं, तावकीनं च तावकम् ॥ १११ ॥

व्याख्या—तद्वेत्त्यधीते इत्यर्थेऽण् इकण् एतौ प्रत्ययौ भवतः । यथा—व्याकरणं वेत्ति अधीते वा वैयाकरणः । "तद्वेत्त्यधीते" ( ६-२-११७ ) इत्यण् "य्वः पदान्तात्प्रागैदौत्" ( ७-४-५ ) इतिसूत्रेण व्या इत्यत्र यकारपराकरणं विधाय विकारस्यैकारः । तर्कं वेत्त्यधीते वा तार्किकः "न्यायादेरिकण्" ( ६-२-११८ ) इतीकणप्रत्ययः । तस्येदमित्यर्थे ईयादयः, यथा—तवेदं त्वदीयं "दोरीयः" ( ६-३-३२ ) इतीयप्रत्ययः । तवेदं तावकीनं, 'वा युष्म-

दस्मदोऽञीनञौ युष्माकास्माकं चास्यैकत्वे तु तवकममकं ( ६-३-६७ ) इतिसूत्रेण ईनञ्प्रत्ययः । तवेदं तावकं, अनेनैव सूत्रेण अञ्प्रत्ययः । स्थानद्वयेऽपि तवकादेशः ॥ १११ ॥

**तेन दीव्यति संसृष्टं, तरतीकण् चरत्यपि । यथाक्षिकदाधिकौडु–पिकशाकटिकादयः ॥ ११२ ॥**

व्याख्या—तेन दीव्यतीत्यादौ इकण् । यथा–अक्षैर्दीव्यति आक्षिकः, " तेन जितजयद्दीव्यत्खनत्सु " ( ६-४-२ ) इतिसूत्रेण इकण् । दध्ना संसृष्टं दाधिकं, "संसृष्टे" ( ६-४-५ ) इतिसूत्रेण इकण् । उडुपेन तरति औडुपिकः, "तरति" ( ६-४-९ ) इतिसूत्रेण इकण् । शकटेन चरति शाकटिकः " चरति" ( ६-४-११ ) इति सूत्रेण इकण् ॥ ११२ ॥

**पण्यात् शिल्पान्नियोगाच्च, शस्त्रात्क्रीतादिकण् यथा ।**
**ताम्बूलिकमार्दङ्गिक–शौल्कशालिकयाष्टिकाः ॥ ११३ ॥**

व्याख्या—पण्याद्यर्थे इकण् स्यात् । यथा–ताम्बूलं पण्यमस्य ताम्बूलिकः, " तदस्य पण्यं " ( ६-४-५४ ) इतिसूत्रेण इकण् । मृदङ्गं वादनं शिल्पमस्य मार्दङ्गिकः, " शिल्पम् " (६-४-५७) इति इकण्। शुल्कशालायां नियुक्तः शौल्कशालिकः, " तत्र नियुक्ते" ( ६-४-७४ ) इतीकण् । यष्टिः शस्त्रमस्य याष्टिकः, "प्रहरणं" ( ६-४-६२ ) इतीकण् ॥ ११३ ॥

**साहस्रिकश्च सार्पिष्क–घार्तिकाद्यास्तु संस्कृते ।**
**उपमाने इवो वच्च, शशीव शशिवन्मुखम् ॥ ११४ ॥**

व्याख्या—सहस्रेण क्रीतः साहस्रिकः, " मूल्यैः क्रीते " ( ६-४-१५ ) इतीकण्। सर्पिषा संस्कृतं सार्पिष्कं, घृतेन संस्कृतं घार्तिकं, " संस्कृते " ( ६-४-३ ) इति द्वयोरिकण्। पुनस्तद्धितप्रत्ययविशेषानाह—उपमाने शशीव मुखं इत्यर्थे शशिवन्मुखं " स्यादेरिवे " ( ७-१-५२ ) इति वत्प्रत्ययः ॥ ११४ ॥

**भवे येकणणाद्याश्च, वंश्यनागरिकार्तवम्। एवं दिवातनं सान्ध्यं, तत्र साधौ हिते च यः ॥११५॥**

व्याख्या—य इकण् अण् इत्याद्याः प्रत्यया भवार्थे स्युः, यथा—वंशे भवो वंश्यः, "दिगादिदेहांशाद्यः" (६-३-१२४) इति यप्रत्ययः। नगरे भवो नागरिकः " भवे " ( ६-३-१२३ ) इतीकण्। ऋतौ भवमार्तवं, " भवे " इत्यण्। एवं दिवा भवं दिवातनं " सायञ्चिरंप्राह्णेप्रगेऽव्ययात् " ( ६-३-८८ ) इतिसूत्रेण तनट्प्रत्ययः। सन्ध्यायां भवं सान्ध्यं, "भर्तुसन्ध्यादेरण्" ( ६-३-८९ ) इत्यण्। तत्र साधौ च हितेऽर्थे यप्रत्ययः स्यात्। यथा—वने साधुर्वन्यः, " तत्र साधौ " ( ७-१-१५ ) इति यः। सभायां साधुः सभ्यः, " तत्र साधौ " यः। युगाय हितो युग्यः, "तस्मै हिते" ( ७-१-३५ ) इति यः, " अवर्णेवर्णस्य " ( ७-४-६८ ) इति सर्वत्रावर्णलुक् ॥ ११५ ॥

**सर्वेभ्यस्त्वतलौ ट्यण् च, क्वापीमन् भाववाचकाः।**
**शुक्लत्वं शुक्लता शौक्ल्यं, शुक्लिमा शुक्लभाववत् ॥ ११६ ॥**

व्याख्या—सर्वेभ्यः शब्देभ्यः परतः त्व तल् ट्यण् क्वापि इमन् एते प्रत्यया भाववाचका भवन्ति। यथा—शुक्लस्य

भावः शुक्लत्वं शुक्लता " भावे त्वतल् " ( ७–१–५५ ) इति त्वतलौ प्रत्ययौ । शुक्लस्य भावः शौक्ल्यं, " वर्णदृढादिभ्यष्यण् च वा" ( ७–१–५९ ) इतिसूत्रेण ष्यण् । कापि इमन्–शुक्लस्य भावः शुक्लिमा " वर्णदृढादिभ्यष्यण् च वा" इति सूत्रेण इमन् प्रत्ययः । पक्षे शुक्लस्य भावः शुक्लभाव इति वाक्यमपि ॥ ११६ ॥

**तदस्यास्तीति मत्वर्थ–स्तत्र स्यात्सर्वतो मतुः ।**
**धनवान् बुद्धिमान् धीमा–नदन्तादिन् धनी गुणी ॥ ११७ ॥**

व्याख्या—तदस्यास्तीति वाक्ये मत्वर्थप्रत्ययो भवति । तत्र सर्वतः सर्वशब्देभ्यो मतुप्रत्ययः स्यात् । यथा—धनं विद्यते यस्य ( अस्यास्ति ) स धनवान्, "तदस्यास्त्यस्मिन्निति मतुः " ( ७-२-१ ) इति मतुप्रत्ययः स्यात् । एवं बुद्धिमान् धीमान् । अदन्तादकारान्ताच्छब्दादिन्प्रत्ययः स्यात् । यथा—धनं विद्यते यस्य स धनी, " अतोऽनेकस्वरात् " ( ७-२-६ ) इति सूत्रेण इन्प्रत्ययः । एवं गुणीत्यपि ॥ ११७ ॥

**एवं यशस्विन्प्रज्ञाल–कृषीवलमुखा अपि । प्रकृष्टेऽर्थे तरतमौ, संख्यायाः पूरणे त्वमी ॥ ११८ ॥**

व्याख्या—यशो विद्यते यस्य स यशस्वी " अस्तपोमायामेधास्रजो विन् " ( ७-२-४७ ) इतिसूत्रेण विन्प्रत्ययः । प्रज्ञा विद्यते यस्य स प्रज्ञालः " प्रज्ञापर्णोदकफेनाल्लेलौ " ( ७–२–२२ ) इतिसूत्रेण लप्रत्ययः । इलप्रत्यये प्रज्ञिल इत्यपि । कृषिरस्यातीति कृषीवलः, " कृष्यादिभ्यो वलच् " ( ६–२–२७ ) इतिसूत्रेण वलच् प्रत्ययः, " वलच्यपि-

त्रादेः" ( ३–२–८२ ) इति दीर्घः । एवं आदिशब्दात् आसुतीवल इत्यादि । प्रकृष्टेऽर्थे तरतमौ प्रत्ययौ भवतः । यथा– प्रकृष्टा पट्वी पटुतरा, "द्वयोर्विभज्ये च तरप्" (७–३– ६) इति तरप्प्रत्ययः "क्यङ्मानिपित्तद्धिते" (३–२–५०) इति पुंवद्भावः । संख्यायाः संख्यावाचिशब्दात् पूरणार्थे अमी वक्ष्यमाणाः प्रत्यया भवन्ति ॥ ११८ ॥

द्वित्रेस्तीयश्चतुःषड्भ्यां, थट् नान्तान्मट् दशावधि ।
एकादशादेर्डश्चैको–नविंशत्यादितस्तमट् ॥ ११९ ॥

व्याख्या—द्विशब्दात्त्रिशब्दाच्च पूरणार्थे तीयप्रत्ययः स्यात् । यथा—द्वयोः पूरणः द्वितीयः, "द्वेस्तीयः" ( ७–१–१६५ ) इति तीयप्रत्ययः । त्रयाणां पूरणस्तृतीयः, "त्रेस्तृ च" ( ७–१–१६६ ) इतिसूत्रेण तीयप्रत्ययः तृआदेशश्च । चतुःषड्भ्यां थट्प्रत्ययः स्यात्, यथा–चतुर्णां पूरणश्चतुर्थः, "चतुरः" ( ७-१-१६३ ) इतिसूत्रेण थट्प्रत्ययः। षण्णां पूरणः षष्ठः, "षट्कतिकतिपयात् थट्" ( ७–१–१६२ ) इतिसूत्रेण थट् । नान्तात्संख्याशब्दान्मट्प्रत्ययः स्यात् । यथा–पञ्चानां पूरणः पञ्चमः, "नो मट्" ( ७–१–१५९ ) इति मट्प्रत्ययः । एवं दशावधि दशशब्दं यावत् पूरणे मट्प्रत्ययो ज्ञेयः । एकादशादेर्डट्प्रत्ययः स्यात् । यथा–एकादशानां पूरण एकादशः, "संख्यापूरणे डट्" ( ७–१–१५५ ) इतिसूत्रेण डट् प्रत्ययः । एकोनविंशत्यादितः तमट्प्रत्ययः । यथा–एकोनविंशतेः पूरणः एकोनविंशतितमः, "विंशत्यादेर्वा तमट्" ( ७–१–१५६ ) इति विकल्पेन तमट्प्रत्ययः । पक्षे एकोनविंशः, "संख्यापूरणे डट्" ( ७–१–१५५ ) इति डट् । एवं विंशतितमः विंशः, त्रिंशत्तमः त्रिंशः, इत्यादि ॥ ११९ ॥

प्रमाणे द्वयसट् दघ्नट्, मात्रट् च प्रकृते मयट् ।
कल्पप् देश्यप् च देशीयर्, किञ्चिदूने विशेषणात् ॥ १२० ॥

व्याख्या—प्रमाणेऽर्थे द्वयसट् दघ्नट् मात्रट् एते प्रत्ययाः स्युः । यथा—जानुनी प्रमाणमस्य जानुमात्रं जलं, "प्रमाणान्मात्रट्" (७-१-१४०) जानुनी प्रमाणमस्य जानुद्वयसं, जानुनी प्रमाणमस्य जानुदघ्नं "वोर्ध्वं दघ्नट् द्वयसट्" (७-१-१४२) इति द्वयसट् दघ्नट् च प्रत्ययौ । प्रकृते मयट् यथा—अन्नं प्रकृतं यत्र अन्नमयं, "प्रकृते मयट्" (७-३-१) इति मयट् प्रत्ययः । किञ्चिदूने विशेषणात् विशेषणवाचिशब्दात्कल्पप्प्रमुखाः प्रत्ययाः स्युः, यथा—ईषदसमाप्ता पट्वी पटुकल्पा पटुदेशीया "अतमबादेरीषदसमाप्ते कल्पप्देश्यप्देशीयर्" (७-३-११) इतिसूत्रेण त्रयोऽपि प्रत्ययाः ॥ १२० ॥

सात्तद्रूपे तदायत्ते, वारे सुचकृत्वसौ च धा ।
तस् पञ्चम्यास्त्र आधारे, प्रकारे था च धा च धण् ॥ १२१ ॥

व्याख्या—तद्रूपे तदायत्ते च सात्प्रत्ययः । यथा—अनग्निमग्निं करोति काष्ठं, "व्याप्तौ स्सात्" (७-२-१३०) इति सात्प्रत्ययः । तदायत्ते यथा—राजनि अधीनं करोति राजसात्करोति धनं, "तत्राधीने" इति (७-२-१३२) इति सात्प्रत्ययः । "वारे सुच्" यथा—द्वौ वारावस्य द्विः, "द्वित्रिचतुरः सुच्" (७-२-११०) इति सुच्प्रत्ययः । पञ्च

वारा अस्य पञ्चकृत्वः, "वारे कृत्वस्" (७-२-१०९) इति कृत्वस् प्रत्ययः। द्विर्भुङ्क्ते, पञ्चकृत्वो भुङ्क्ते, "अधणतस्वाद्याशसः" (१-१-३२) इति अव्ययसंज्ञा। धाप्रत्ययो यथा—बहव आसन्ना वारा अस्य बहुधा भुङ्क्ते, "बहोर्धासन्ने" (७-२-११२) इति धा। तसुप्रत्ययो यथा—ग्रामात् ग्रामतः "अहीयरुहोऽपादाने" (७-२-८८) इति तस्। सर्वस्मात् सर्वतः। यस्मात् यतः, बहोर्बहुतः, स्थानत्रयेऽपि "किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्तस्" (७-२-८९) इति तसुप्रत्ययः। आधारे त्रप्प्रत्ययो यथा—कस्मिन् कुत्र, सर्वस्मिन् सर्वत्र, बहौ बहुत्र, "सप्तम्याः" (७-२-९४) इतिसूत्रेण त्रप्। प्रकारे थादयो यथा—सर्वप्रकारेण सर्वथा, अन्यप्रकारेण अन्यथा, "प्रकारे था" (७-२-१०२) इति था। एकः प्रकारोऽस्य एकधा, बहुधा, "संख्याया धा" (७-२-१०४) इति धा, "बहुगणं भेदे" (१-१-४०) इति बहुशब्दस्य संख्यावत्त्वं। कतिधा, अत्र "डत्यतु संख्यावत्" (१-१-३९) इति संख्यावत्त्वं। धण् यथा—द्वौ प्रकारौ विभागौ वा एषां द्वैधानि, "तद्वति धण्" (७-२-१०८) इति धण्। त्रयः प्रकारा विभागा वा एषां तानि त्रैधानि, "तद्वति धण्"। अत्र "अधणतस्वाद्याशसः" इति धणवर्जनादव्ययसंज्ञा न भवति ॥ १२१ ॥

**कालाधारे च किंयत्तत्सर्वैकान्यपरश्च दा। इष्ठेयसौ गुणाङ्गात्कः, स्वार्थे चेत्यादि तद्धितम् ॥ १२२ ॥**

व्याख्या—किंयत्तत्सर्वैकान्यशब्देभ्यः कालाधारार्थे दाप्रत्ययः स्यात्। यथा—कस्मिन् काले कदा, यस्मिन् काले यदा, तस्मिन् काले तदा, सर्वस्मिन् काले सर्वदा, एकस्मिन् काले एकदा, अन्यस्मिन् कालेऽन्यदा। "किंयत्तत्सर्वैकान्यात्काले दा" (७-२-९५) इति दाप्रत्ययः। गुणाङ्गात् गुणप्रवृत्तिहेतुकात् शब्दात् इष्ठ ईयस् एतौ प्रत्ययौ भवतः।

यथा–एषां मध्ये प्रकृष्टः पटुः पटिष्ठः "गुणाङ्गाद्वेष्ठेयसू" ( १-३-९ ) इतीष्ठप्रत्ययः, पक्षे पटुतमः, "प्रकृष्टे तमप्" ( ७-३-५ ) । द्वयोर्मध्ये प्रकृष्टो गुरुर्गरीयान्, "गुणाङ्गाद्वेष्ठेयसू" इतीयसू, पक्षे गुरुतरः, "द्वयोर्विभज्ये च तरप्" ( ७-३-६ ) । स्वार्थे कप्रत्ययो यथा–याव एव यावकः, मणिरेव मणिकः, "यावादिभ्यः कः" (७-३-१५) इति कः, इत्यादि तद्धितं ज्ञेयम् ॥ १२२ ॥

विशेषमाह—

स्यादयस्तद्धितोत्थाश्च, प्रत्ययाः सिद्धशब्दतः ।
आख्यातकृदुणाद्यास्तु, धातोः शब्दादिसाधकाः ॥ १२३ ॥

व्याख्या—स्यादयस्तद्धितभवाश्च प्रत्ययाः सिद्धशब्दतो निष्पन्नशब्दाद्भवन्ति । आख्यातप्रत्ययाः कृत्प्रत्यया उणादिप्रत्ययाश्च धातोरुत्पन्नाः सन्तः शब्दादिसाधका भवन्ति शब्दादिनिष्पत्तिहेतवो भवन्ति । आदिशब्दात् क्रियाप्रयोगसाधकाश्चेति । तथैवोदाहृतम् ॥ १२३ ॥

उपसंहारमाह—

एवं कारकबोधार्थं, प्रयोगाः केऽपि दर्शिताः ।
समासास्तु प्रकरणा–द्वाच्या वृत्तद्वयोदितात् ॥ १२४ ॥

व्याख्या—कारकज्ञानाय केऽपि प्रयोगा दर्शिताः। समासास्तु वृत्तद्वयोदितात् काव्ययुगोक्तात् प्रकरणात् ग्रन्थाद्वाच्याः ॥ १२४ ॥

तच्च वृत्तद्वयं यथा—

द्वन्द्वश्चकारैः समनामविग्रहा–दाद्योत्तरास्तत्पुरुषे विभक्तयः।
चाभ्यां समस्येत विशेषणैर्गुणी, तदान्तरस्थेन च कर्मधारये ॥ १२५ ॥

व्याख्या—समनामविग्रहात् नाम्नोर्नाम्नां वा विग्रहो नामविग्रहः, समस्तुल्यश्चासौ नामविग्रहश्च समनामविग्रहस्तस्मात् चकारैर्द्वन्द्वसमासः स्यात्। उभयपदप्रधानो द्वन्द्वः। यस्य क्रियाभिसंवन्धस्तस्य प्राधान्यं। स च द्विविधः इतरेतरद्वन्द्वः समाहारद्वन्द्वश्च। स (पू) र्वस्मिन् द्विवचनं बहुवचनं वा। लिङ्गं तु पुरो वर्तमानशब्दापेक्षं। यथा घटश्च पटश्च घटपटौ। घटश्च पटश्च लकुटश्च घटपटलकुटाः। घटश्च घटी च घटघट्यौ "चार्थे द्वन्द्वः सहोक्तौ" (३–१–११७) इति सूत्रेण समासः। समाहारे तु क्लीबत्वं एकवचनं (च)। यथा सुखं च दुःखं च सुखदुःखं, "विरोधिनामद्रव्याणां न वा द्वन्द्वः स्वैरिति" (३–१–१३०) समाहारद्वन्द्वः। दधि च घृतं च दधिघृतं, "पशुव्यञ्जनानां" (३-१-१३२) इति समासः। आरा च शस्त्री च आराशस्त्रि, "अप्राणिपश्वादेः" (३-१-१३६) इति समासः। अवयवार्थप्रधान इतरेतरयोगः, समुदायार्थप्रधानः समाहारः (इति द्वन्द्वः) १। आद्योत्तरास्तत्पुरुषे विभक्तयः आद्योत्तराः प्रथमादिका विभक्तयस्तत्पुरुषे भवन्ति। तत्पुरुष उत्तरपदप्रधानः। पूर्वपदे सप्तापि विभक्तयः, उत्तरपदे प्रायः प्रथमा।

यथा–शोभनो राजा सुराजा, "सुः पूजायां" (३-१-४४) इति समासः। धर्मं श्रितो धर्मश्रितः, "श्रितादिभिः" (३-१-६२) इति समासः। मदेन पटुः मदपटुः, "तृतीया तत्कृतैः" (३-१-६५) इति सः (समासः) जीवेभ्यो हितं जीवहितं, जनेभ्यः सुखं जनसुखं, "हितादिभिः" (३-१-७१) इति सः। वृकाद्भयं वृकभयं, "पञ्चमी भयाद्यैः" (३-१-७३) इति सः। राज्ञः पुरुषो राजपुरुषः, "षष्ठ्ययत्नाच्छेषे" (३-१-७६) इति सः। समरे सिंह इव समरसिंहः, "सिंहाद्यैः पूजायां" (३-१-८९) इति सः। उत्तरपदे प्रायः प्रथमेति प्रायोवचनात्प्रथमाद्याः सप्तमीं विना सर्वा अपि विभक्तयः क्वचिदुत्तरपदेऽपि स्युः, अन्यपदार्थप्रधानत्वं च। यथा प्रगत आचार्यः प्राचार्यः, अतिक्रान्तः खट्वामतिखट्वः, अवक्रुष्टः कोकिलयाऽवकोकिलः, परिग्लानोऽध्ययनाय पर्यध्ययनः, निर्गतः कौशाम्ब्या निष्कौशाम्बिः, वाहुलकात् पष्ठ्याऽपि अन्तर्गार्ग्यस्य अन्तर्गार्ग्यः। एषु सर्वेषु "प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः" (३-१-४७) इति सः। कुम्भं करोतीति कुम्भकारः, "ङस्युक्तं कृता" (३-१-४९) इति सः। न गौः अगौः, "नञ्" (३-१-५१) इति सः। नञ्तत्पुरुषात्" (७-३-७१) इति समासान्तप्रतिषेधः। प्राचार्यादयो नित्यसमासाः, अस्वपदविग्रहत्वात्। इति तत्पुरुषः २। 'चाभ्यां समस्येत विशेषणैर्गुणी तदान्तरस्थेन हि(च)कर्मधारये'–तदा तच्छब्देनान्तरस्थेन मध्यस्थितेन चाभ्यां चकाराभ्यां द्वाभ्यां विशेषणैः सह गुणी विशेष्यं कर्मधारये समस्यते। उभयपदप्रधानः कर्मधारयः। पूर्वं विशेषणपदं अग्रे विशेष्यपदं। यथा त्रिषु लिङ्गेषु–वीरश्चासौ पुरुषश्च वीरपुरुषः, "पूर्वापरप्रथमचर (मजघन्यसमानमध्यममध्यमवीरम् ३-१-१०३) मेति सः। मधुरा चासौ वाणी च मधुरवाणी,

"विशेषणं विशेष्येणैकार्थम्" (कर्मधारयश्च ३-१-९६) इति सः। "पुंवत्कर्मधारये" ( ३-२-५७ ) इति पुंवद्भावः। नन्दनं च तद्वनं च नन्दनवनं। सप्त च ते ऋषयश्च सप्तर्षयः। पञ्च च तानि महाव्रतानि च पञ्चमहाव्रतानि। इत्यादि कर्मधारयः ३ ॥ १२५ ॥

अथ बहुव्रीहिः—

**प्रायो बहुव्रीहिरयं गुणैर्गुणी, यदा समस्तोऽन्यविशेषणं भवेत्।**
**संख्याद्यपुंस्त्र्येकतया पदं द्विगा–वुपादिपूर्वं तदमन्तमव्ययी ॥ १२६ ॥**

व्याख्या—प्रायो गुणैर्विशेषणैर्गुणी विशेष्यं यदा यच्छब्देन समस्तः सन् अन्यविशेषणं यत्र भवेत् सोऽयं समासो बहुव्रीहिः स्यात्। बहुव्रीहिरन्यपदप्रधानः, द्वितीयाद्याः षड् विभक्तयो यच्छब्दे स्युः, अन्यशब्दप्रधानत्वात्तल्लिङ्गवचने च भवतः। यथा–आरूढो वानरो यं स आरूढवानरो वृक्षः। जितो मोहो येन स जितमोहो जिनः। दत्ता दक्षिणा यस्मै स दत्तदक्षिणो द्विजः। वीतो रागो यस्मात्स वीतरागः सर्वज्ञः। शीता रश्मयो यस्य स शीतरश्मिश्चन्द्रः। प्रादुर्भूता अङ्कुरा यस्यां सा प्रादुर्भूताङ्कुरा भूः। एषु सर्वेषु "एकार्थं चानेकं च" ( ३-१-२२ ) इति सः। तथा सहशब्दस्तृतीयान्तेन समस्यान्यविशेषणे बहुव्रीहिः। यथा–सह विद्यया वर्तते यः स सविद्यः, "सहस्तेन" (३-१-२४) इति समासः। तथा वारार्थे विकल्पार्थे च प्रथमान्तं संख्यावाचि पदद्वयं स्यात्, सोऽपि प्रायोवचनाद्बहुव्रीहिः स्यात्। यथा–द्विर्दश द्विदशा विंशतिरित्यर्थः। "प्रमाणी संख्याड्डः" ( ७-३-१२८ ) इति डप्रत्ययः, पञ्चकृत्वः षट् पञ्चषाः

पूर्ववत् त्रिंशदित्यर्थः। विकल्पार्थे यथा—द्वौ वा त्रयो वा द्वित्राः। त्रयो वा चत्वारो वा त्रिचतुराः। पञ्च वा षड् वा पञ्चषाः। अत्र भेदद्वयेऽपि "सुज्वार्थे संख्या संख्येये संख्यया वहुव्रीहिः" (३–१–१९) इति समासः। व्यधिकरणवहुव्रीहिर्यथा—धर्मे मतिर्यस्य स धर्ममतिः। दुःखस्य क्षयो यस्मात्स दुःखक्षयः। शूलं पाणौ यस्य स शूलपाणिः। "एकार्थं चानेकं च" इति समासः। तथा दक्षिणस्याः पूर्वस्याश्च दिशोर्यदान्तरालं सा दक्षिणपूर्वा, आग्नेयी दिगित्यर्थः। एवं दक्षिणपश्चिमा नैर्ऋतदिगित्यर्थः। पश्चिमोत्तरा वायुदिगित्यर्थः। उत्तरपूर्वा ईशानदिगित्यर्थः। "दिशो रूढ्याऽन्तराले" (३–१–२५) इति समासः। एवमेकादशभेदो वहुव्रीहिः प्रोक्तः ४। अथ द्विगुः—'संख्याद्यपुंस्त्र्येकतया पदं द्विगौ' द्विगुसमासे पदं उत्तरपदं भवति। कीदृशं? संख्यादि संख्यावाचि पदं विशेषणीभूतं आदौ यस्य तत् संख्यादि एवंविधमुत्तरपदं विशेष्यभूतं भवति। पदद्वयमपि षष्ठ्यन्तं समाहारशब्देन समस्यते। कया? अपुंस्त्र्येकतया अपुमान् नपुंसकलिङ्गं स्त्री च स्त्रीलिङ्गं तयोरेकता एकवचनत्वं तया, नपुंसकलिङ्गं स्त्रीलिङ्गं वा एकवचनान्तं समासान्ते स्यादित्यर्थः, पुंलिङ्गं तु न स्यादेवेति। उत्तरपदप्रधानो द्विगुः। अकारान्ते नित्यं ङीः, अन्नन्ते आवन्ते तु विकल्पेन ङीः, शेषः सर्वः क्लीवलिङ्गः। यथा—त्रयाणां लोकानां समाहारस्त्रिलोकी, "द्विगोः समाहारात्" (२-४-२२) इति ङीप्रत्ययः। अन्नन्तो यथा—पञ्चानां राज्ञां समाहारः पञ्चराजी पञ्चराजं। आवन्तो यथा—तिसृणां मालानां समाहारः त्रिमालं त्रिमाली। तिसृणां सन्ध्यानां समाहारस्त्रिसन्ध्यं। त्रिसन्ध्यस्य क्लीवत्वमेव। पञ्चानां पर्वणां समाहारः पञ्चपर्वी पञ्चपर्वं। अष्टानां कर्मणां समाहारः अष्टकर्मी

॥ ८० ॥

अष्टकर्मं । "द्विगोरन्नह्नोऽट् ( ७-३-९९ ) इत्यट् समासान्तः । "द्विगोः समाहारात्" इतिसूत्रेण ङीः, त्रयाणां भुवनानां समाहारस्त्रिभुवनं इत्यादौ पात्रादिगणसद्भावान्नपुंसकत्वं । द्वयोः साध्वोः समाहारो द्विसाधु । तिसृणां नदीनां समाहारस्त्रिनदि । एवं पञ्चानां समितीनां समाहारः पञ्चसमिति । द्विगुस्त्रिविधः—समाहारद्विगुर्यथा—त्रयाणां पदानां समाहारस्त्रिपदी १ । तद्धितद्विगुर्यथा—पञ्चसु कपालेषु संस्कृतः पञ्चकपाल ओदनः २ । उत्तरपदद्विगुर्यथा—पञ्च गावो धनमस्य पञ्चगवधन इति ३ । अत्र सर्वत्र "संख्यासमाहारे च द्विगुश्चानाम्न्यम्" ( ३-१-९९ ) इतिसूत्रेण द्विगुसमासः । अत्र विशेषो लिख्यते यथा—द्विगुतत्पुरुषकर्मधारयाणां त्रयाणामपि समासानामैक्यमिति वैयाकरणसंमतं । यथा—तिसृणां रात्रीणां समाहारः त्रिरात्रः त्रिरात्रं, अत्र तत्पुरुषात् "संख्यातैकपुण्यव ( र्षादीर्घाच्च रात्रेरत् ७—३—११९ ) र्ष" इति सूत्रेणात्समासान्तः । कर्मधारयात् "पुंवत्कर्मधारये" इति पुंवद्भावः । द्विगुसमाहारसद्भावाच्च एकवद्भावः । "समाहारे" इतिवचनात् पुंनपुंसकत्वं, इत्येकत्र समासत्रयभावना । एवमेतेषां मध्ये समासद्वयभावनापि ज्ञेया, यथा— पञ्चानां राज्ञां समाहारः पञ्चराजी, अत्र तत्पुरुषात् राजन्सखेः ( ७-३-१०६ ) इति सूत्रेणात्राट् समासान्तः प्रत्ययः । "नोऽपदस्य" ( ७—४—६१ ) इति नलुक्, "अवर्णेवर्णस्य" ( ७—४—६८ ) इत्यलुक् । द्विगुसमासाच्च "द्विगोः समाहारात्" इति ङीप्रत्ययः । ततोऽत्र द्विगुतत्पुरुषौ ज्ञेयौ । विशेषणविशेष्यसमासाच्च "विशेषणं विशेष्येणैकार्थम्" इति कर्मधारयश्च । तथा जरंश्चासौ गौश्च जरद्गवः, अत्र "विशेषणं विशेष्येण०" इति कर्मधारयः । तत्पुरुषाच्च "गोस्तत्पुरुषात्" ( ७-३-१०५ ) इत्यट् समासान्तः । एवं यत्र द्विगुस्तत्र समासत्रयं नियमतो ज्ञेयं । तेषां मध्यादेकस्य द्वयोस्त्रयाणां वा कार्यं यथा-

संभवं ज्ञेयं । यत्र च कर्मधारयस्तत्रावश्यं तत्पुरुषो ज्ञेयः । तत्पुरुषस्तु केवलोऽपि स्यात् । इति समासत्रयरहस्यं ५ । अथाव्ययीभावः—'उपादिपूर्वं तदमन्तमव्ययी' 'उपादिपूर्वं' उपशब्द आदौ येषां अव्ययशब्दानां ते उपादयोऽव्ययशब्दास्ते पूर्वं पूर्वपदं यत्र तदुपादिपूर्वं, एवंविधं तत्पूर्वोक्तं पदं उत्तरपदं भवति । कीदृशं ? अमन्तं सर्वविभक्तीनामकारान्तात् प्रायोऽमादेशो भवति सोऽम् अन्ते समासान्ते यस्योत्तरपदस्य तदमन्तं एवंविधं यत्रोत्तरपदं भवति सोऽव्ययी पदैकदेशे पदसमुदायोपचारादव्ययीभावः समासो भवतीत्यर्थः । पूर्वपदप्रधानोऽव्ययीभावः । यथा—कुम्भस्य समीपमुपकुम्भं अस्ति, पश्य, कृतं, क्रुध्यति, शोभा, शेते, क्रमेण पञ्चमीवर्जाः षड् विभक्तयो ज्ञेयाः । "अमव्ययीभाव ( स्यातोऽपञ्चम्याः ३-२-२ ) स्य" इति षण्णां विभक्तीनाममादेशः । विभक्तिसमीपसमृ ( द्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिपश्चाक्रमख्यातियुगपत्सदृक्सम्पत्साकल्यान्तेऽव्ययम् ३-१-३९) द्धि इति सूत्रेणाव्ययीभावः । पञ्चम्यां तु उपकुम्भादानयेति । अकारान्तशब्दान् विनाऽन्यस्वरान्तव्यञ्जनान्तशब्देभ्यो विभक्तिलोप एव स्यात् । यथा—स्त्रियमधिकृत्य अधिस्त्रि । साधोः समीपमुपसाधु । नद्याः समीपमुपनदि । भवतः समीपमुपभवत् । भवत्याः समीपमुपभवति । सुखस्यानतिक्रमेण यथासुखं " यथार्थेति " ( योग्यतावीप्सार्थानतिवृत्तिसादृश्ये ३-१-४० ) समासः । क्वचित् षष्ठ्यन्तपदेन यथा—गङ्गायाः पारं पारेगङ्गं । सभाया मध्यं मध्येसभं । वृक्षस्याग्रं अग्रेवृक्षं । इत्यादि समासलक्षणम् ॥ १२६ ॥

गुरुतपगणगगनाङ्गण—तरणिश्रीरत्नसिंहसूरीणाम्।
शिष्याणुनेदमौक्तिक—मुदितमुदयधर्मसंज्ञेन ॥१२७॥
मुनिगगनशरेन्दु १५०७ मिते, वर्षे हर्षेण सिद्धपुरनगरे ।
प्राथमिकस्मृतिहेतो—र्विहितो वाक्यप्रकाशोऽयम् ॥ १२८ ॥

व्याख्या—गुरुश्चासौ तपगणश्च गुरुतपगणः,गगनमेव अङ्गणं गगनाङ्गणं,गुरुतपगणश्चासौ एव गगनाङ्गण गुरुतपगण-गगनाङ्गणं,गुरुतपगणगगनाङ्गणे तरणयः गुरुतपगणगगनाङ्गणतरणयः, रत्नसिंहाश्च ते सूरयश्च रत्नसिंहसूरयः, श्रिया युक्ता रत्नसिंहसूरयः श्रीरत्नसिंहसूरयः, गुरुतपगणगगनाङ्गणतरणयश्चते श्रीरत्नसिंहसूरयश्च गुरुतपगणगगनाङ्गणतरणिश्रीरत्न-सिंहसूरयः तेषां उदयधर्म इति संज्ञा यस्यासौ उदयधर्म संज्ञः। तेने उदितं कथितं। सिद्धपुरं च तत्नगरं च सिद्धपुरन-गरं तस्मिन्। प्राथमिकानां स्मृतिः प्राथमिकस्मृतिः प्राथमिकस्मृतेर्हेतुः प्राथमिकस्मृतिहेतुः तस्मात्। १२७—१२८ ॥

॥ इति श्रीउदयधर्ममुनिकृत वाक्यप्रकाशाभिधौक्तिकस्य टीका संपूर्णा

Published by Venichand Surchand, Secretary Jain Sanskrit Pathashala, Mhesana.
Printed by R. Y. Shedge at the "Nirnaya-sagar Press," 23, Kolbhat Lane, Bombay.